श्रीः

# श्रीमन्महाराज संस्कृत महापाठशाला पत्रिका

(त्रैमासिकी)

सम्पुटम् १४] अक्टोबर् १९३८ [सञ्चिका ४

सम्पादकः
एम्. वि. कृष्णमूर्ति, एम्.ए.,
श्रीमन्महाराज संस्कृत महापाठशालाध्यक्षः.



मैसूरु
राजकीय शाखामुद्रालये सम्मुद्रिता
१९३९

# विषयसूचना

## स म्पा द की य स मि तिः

---

१. श्रीमन्तः अर्थशास्त्रविशारदाः विद्यालङ्काराः महामहोपाध्यायाः डाक्टर् आर्. शामशास्त्रिणः, बि.ए., पिएच्.डि., एं.आर्. ए.एस्., विश्रान्त मैसूरु प्राच्यकोशागाराध्यक्षाः शासन-विमर्शशाखाध्यक्षाश्च

२. श्रीमन्तः प्रोफेसर् सि. आर्. नरसिंहशास्त्रिणः एं.ए., मैसूरु महाराजाकालेज् संस्कृत प्रधानोपाध्यायाः

३. पण्डितरत्नं धर्माधिकारिणः ब्र. श्री. काशी शेषवेङ्कटाचल-शास्त्रिणः

४. साहित्यरत्नं महाविद्वांसः ब्र. श्री. क. गोपालकृष्णशास्त्रिणः महाराजाकालेज् संस्कृतपण्डिताः

५. महाविद्वांसः ब्र. श्री. करूरु शेषाचार्याः, महापाठशाला ज्यौतिषप्रधानोपाध्यायाः

६. विद्वांसः ब्र. श्री. एस्. वेङ्कटाचार्याः, महापाठशाला साहित्य प्रधानोपाध्यायाः

७. श्रीमन्तः एस्. वि. कृष्णमूर्तयः, एं.ए., महापाठशालाध्यक्षाः (सम्पादकाश्च)

॥ श्रीः ॥

# श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका

प्रतिमासत्रयं प्रकटीक्रियमाणा

" कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं॰ समाः "

(ईशोपनिषत्)

सम्पुटम् १४] १९३८ [सञ्चिका ४

## सुभाषितानि

पिनाकफणिबालेन्दुभस्ममन्दाकिनीयुता ।
तथापि भव ते मूर्तिरपवर्गानुसारिणी ॥ १ ॥

परमिममुपदेशमाद्रियध्वं
  निगमवनेषु नितान्तखेदखिन्नाः ।
विचिनुत भवनेषु वल्लवीना-
  मुपनिषदर्थमुलूखले निबद्धम् ॥ २ ॥

विपुलहृदयाभियोगे खिद्यति काव्ये जडो न मौर्ख्ये स्वे ।
निन्दति कञ्चुकमेव प्रायश्शुष्कस्तनी नारी ॥ ३ ॥

अर्थोऽस्ति चेन्न पदशुद्धिरथास्ति सापि
  नो रीतिरस्ति यदि सा घटना कुतस्त्या ।
साप्यस्ति चेन्न नववक्रगतिस्तदेत-
  द्व्यर्थं विना रसमहो गहनं कवित्वम् ॥ ४ ॥

परश्लोकांस्तोकान्प्रतिदिवसमभ्यस्य ननु ये
  चतुष्पादीं कुर्युर्बहव इह ते सन्ति कवयः ।
अविच्छिन्नोद्गच्छज्जलधिलहरीरीतिसुहृदः
  सुहृद्या वैशद्यं दधति किल केषां चन गिरः ॥ ५ ॥

सि. आर्. नरसिंहशास्त्री, एं.ए.,
संग्रहीता.

॥ श्रीहयवदन परब्रह्मणेनमः ॥

**महीशूरनगर विराजमान श्रीमद्ब्रह्मतन्त्रपरकालमठीय श्रीहयमुखजयन्तीमहोत्सवाङ्गभूत षष्टितम बहुधान्यवात्सरिक श्रावणिक विद्वत्सभोदन्तः.**

आर्याः सभासदः पण्डितप्रकाण्डाश्च,

साम्प्रतमस्याः सभायाः षष्टितमोऽयं वत्सरः समुपनत इति मोमुद्यामहे भवतां पुरतो विज्ञप्तुम्। समितिरियं श्रीमद्ब्रह्मतन्त्रपरकालमठीय श्रीहयवदनास्थानीमधितस्थिवद्भिः सर्वतन्त्रपारदृश्वभिः श्रीमद्रङ्गनाथब्रह्मतन्त्रपरकालसंयमिभिरुपक्रान्ता व्यतीते शशिखवसुभू (१८०१) मिते श्रीशालिवाहशके (क्रिस्तशके १८७८) बहुधान्यशरदि श्रावणमासि। तद्देशिकेन्द्राणां भृशमभिनन्दनीयमपदानमद्य संक्षिप्य निवेदयिष्यामः।

इमे खलु यतिप्रवरा अधिबाहुदातटिनीतटं चित्पुरी (चित्तूरु) मण्डलान्तर्गत "वाविल्पाडु" नाम्नि श्रीग्रामे वेदगुणशैलेन्दु (१७३४) समे शालिवाहसमये (क्रिस्तशके १८११) श्रीमदाङ्गिरसहायने वैशाख पौर्णमास्यां विशाखायां कृतावतरणाः श्रीमद्वाधूलकुल भूषणनरसिंहार्यतनूभवा वेङ्कटलक्ष्म्यम्बागर्भसंभवा विद्वन्मणि श्रीरामचन्द्रार्यावरजा महीशूर जनपद एव प्रायः पञ्चविंशतिवत्सरान् क्षणमिवानैषुर्नानातन्त्राभ्यसनपाठप्रवचनादिभिः। तदनु ते विपश्चिदपश्चिमाः प्रस्थायोदीच्यं देशं तत्र काशीनवद्वीपादि संस्थान राराजद्विद्वत्परिबृढसमितिषु स्वस्य चतुस्तन्त्रपाण्डितीमाविष्कुर्वाणा भगवद्रामानुजसिद्धान्तं निस्सपत्नं प्रचारयन्तः कर्म, ज्ञान, भक्ति, प्रपदनरूपचतुर्विधापवर्गोपायस्वरूपमुपन्यसन स्वाचरणोपदेशादिभिरूर्जितयन्तः परमां विख्यातिमाप्नुवन्तस्तमेव जनपदमभ्यवात्सुः ॥

अथ रीवासंस्थानाधीश्वरः श्रीरघुराजसिंहमहीपालोऽदसीयं सर्वमप्युदन्तमवकर्ण्य प्रमोदजलधिजलमानुषायमाणहृदयो निनायामून् स्वीयमास्थानम्। स तत्रैतान् प्रधानविद्वत्पदवीमधिरोप्य तत्करुणापाङ्गसमेधितधिषणः सुचिरमध्यगीष्ट तेभ्यो न्यायवेदान्तादीनि शास्त्राणि । किंच स नृपालस्तान् महाभागानतिवेलं महाधनराङ्कवहीरमयग्रैवेयकादिभिः सभाजयामास काशीजयपुरदरभङ्गादिनृपास्थानेषु स्वेन प्रवर्तितासु बह्वीषु विद्वत्सभासु। अपिचैषामनितरसाधारणीं वैदुषीमभिवीक्ष्यानेकधा सदकार्षुरौत्तराहाः पण्डितप्रवरा नृपवराश्च। तदा तत्रैषामास सर्वतो विसृत्वरी रीवारङ्गाचार्यस्वामीति प्रतीतिः । अद्याऽपि विद्योतते तद्देशेषु तादृशी प्रतीतिः ॥

एवमतीते कतिपये समये परं पदमलमकार्षुः श्रीहयमुखास्थानीमलङ्कुर्वाणाः श्री श्रीनिवासदेशिकेन्द्रब्रह्मतन्त्रपरकालस्वामिनः ॥

अथ तदा तदास्थाननिर्वहणाय विमृश्यकारिणामग्रिमेण श्रीमच्चामराजेन्द्रसार्वभौमेनेमे सप्रश्रयं संप्रार्थिता गार्हस्थ्ये रीवा रङ्गाचार्यस्वामिनामविश्रुता विद्वदवतंसास्तदभ्यर्थनामुररीकुर्वाणाः श्रीब्रह्मतन्त्रपरकालमठीयभगवत्तुरगाननास्थान्यां बभूवुर्मूर्धाभिषिक्ता रसनन्दमुनीन्दु (१७९६) मिते शकनृपसमये (क्रिस्तशके १८७३) श्रीमुखवत्सरे भाद्रे मासि शुक्लद्वितीयायाम् ॥

तदात्वे द्वित्रा वत्सरा आसन्महीशूरपुर्यां महाराजाश्रयेण मासवेतनमाददानाया विपश्चिन्मण्डल्याः। तदातदा नृपाभ्यर्थनया पण्डितसमितावाध्यक्ष्यमालेदिवाद्भिर्बहुमतीरनुगृह्णद्भिः श्रीदेशिकेन्द्रैरापेदे सुषमां पर्वेन्दुरिव विबुधपरिबृढनिबिरीसा महीशूरपुरीया महाभूपसंस्कृतमहाकलाशाला । श्रीस्वामिनामधिसन्निधि प्रत्यहं निरन्तरं निरन्तरायं निरवृतंश्चतुर्ष्वपि तन्त्रेषु नवानवानि प्रवचनानि। अद्याऽपि तत्र तत्र दरीदृश्यन्ते तादृश देशिकेन्द्राणामव्यवहितव्यवहितभावाद्बहवोऽन्ते वासिनः ॥

तदास्तां तावत्। पूर्वमेव न्यवेदयाम भवतामधिसविधं श्रीमद्गुरुवरा व्यरचन् सभामिमामिति। परन्तु शङ्केयमुदियाद्विश्वेषां

मनसि यदेतद्गुरुप्रवेकेभ्यः पूर्वं श्रीमठे न काप्यासीत मनीषिणां संसदिति । न स्तोकमात्रोऽप्यवकाशस्तस्याः शङ्कायाः । पुरा तत्तत्स्वामिनामाधिपत्यसमयेष्वनेके विदेशीयाः स्वदेशीयाश्च सुधियो यथावकाशमनियतावसरं श्रीमठमुपेत्याधीतेषु शास्त्रेषु स्वां पाण्डितीं प्रकटयन्त आसत यथार्हमनेकधा बहुमतीराददानाः । श्रीमद्रङ्गनाथब्रह्मतन्त्रपरकालसंयमीन्द्राणां समये तु नियतानियत योरुभयोरपि कालयोरशेषाणां विदुषामधिवेशनं तदभ्यर्हणं चेतीयान् विशेषः । तादृशयतिवर्याणामवस्थानसमय एव राजधान्यामस्यामुपाक्रामि विद्वत्परीक्षा तस्यां गीर्वाणमहाविद्याशालायाम् । किंच तत्परीक्षायै प्रत्यब्दं श्रावणभाद्रमासयोरत्र समजनि स्वपरदेश्यसंख्यावतां समावेशः । ईदृशविबुधपरिषदुत्तजनाय सकलकलोद्धरणबद्धादराः संयमीन्द्राः श्रीमच्चामनृपमौलये विनिवेद्य श्रीसन्निधावपि कामपि समज्यां व्यतानीदतीतबहुधान्यशरदि नभसि मासि । अतोऽसौ समितिश्चातुर्मास्यसंकल्पादर्वागेव प्रतिहायनं श्रीमठे समेधमाना समिन्धे ॥

नेदं तिरोहितं नाम सर्वेषां प्रेक्षावतां यत्सभानिर्माणं शास्त्राणामभिवर्धनस्य तज्ज्ञानां प्रोत्साहनस्य च निदानमिति । वस्तुतस्त्रीण्येतानि कारणानीदृक्षसंसन्निर्मितेर्यत्सभासदां मिथः सौहार्दं सर्वतो विद्याशालामठाद्यधिवेशनं धार्मिकधनिकोदार प्रभूणामवलम्बनं चेति । बहोः कालात् सांस्कृतीं वाणीं निरुपप्लवं त्रायमाणा विराजते महीशूरपुरीयनृपालपारम्परी । साम्प्रतमपि यथापुरं संस्कृतकलामस्मत्परिपोषकस्तुरीयः श्रीमान् कृष्णराजसार्वभौमोऽनेकधा सकौतुकमुत्तेजयतीदं जानन्त्येव सर्वे । एष धार्मिकप्रवरो वदान्यमणिर्नृपतिमौलिः सकुटुम्बं निरामयो यशस्वी विजयी चिरायुश्च भारतभूतले चिरं समिन्धामिति सभक्त्युन्मेषमभ्यर्थयामहे सर्वेश्वरं भगवन्तं वाहाननम् ॥

इत्थमावेदयिता,

करूरु शेषाचार्यः,

संस्थानमहाविद्वान्.

## निर्दिष्टचरविद्वत्परिषदि पठिताः श्लोकाः.

---

वामोत्सङ्गलसत्सरोजनिलयानिघ्नप्रहेमप्रभ-
स्ववर्णामानुतरम्यदक्षिणभुजासंश्लिष्टकण्ठोऽनघः ।
नानाम्नायसुगन्धिहेषितरवश्शीतांशुगेहः परो
वाहास्यो भवतां तनोतु भवुकं कारुण्यदुग्धोदधिः ॥ १ ॥

नानातन्त्रनदीष्णनिस्तुलपरालभ्याद्भुतानन्तधी
जालोत्तम्भितपाण्डितीभवयशश्शुक्लीकृताशामुखः ।
श्रीरङ्गेन्द्रयतिप्रकाण्डकलिजिद्वादीभपञ्चाननः
श्रीवागीशपदाब्जसेवनधनो भूमौ समिन्धां चिरम् ॥ २ ॥

कर्णाटक्षितिपौघलब्धविविधप्राज्याभरत्नाश्रिता-
नर्घश्लाघ्यमृगेन्द्रपीठविलसत्कृष्णेन्द्रभूमीश्वरः ।
सौजन्यादिगुणोदधिस्ससचिवश्शास्तु प्रजा रञ्जय-
न्नुर्वीं धर्म्यपथं श्रितो वहुसमा नीरोगकायो जयी ॥ ३ ॥

श्रीरङ्गेन्द्रकलिद्विषा रसनवाद्रीन्दू (१७९६) न्मिते हायने
शाके श्रीमुखवत्सरे हयमुखास्थानेऽभिषिक्तेन च ।
प्रक्रान्ता वहुधान्यनामशरदीन्द्वष्टभू (१८०१) संमिते
शाके श्रावणिके सभा विजयते षष्ठ्यब्दगेयं विदाम् ॥ ४ ॥

श्रीवाहास्यपदत्रसन्तननमस्यानन्दभूम्ना तृणं
मन्वानस्सकलं विरक्तिकरुणावादान्यकाद्यम्वुधिः ।
काणादादिमदर्शनप्रसृमरज्ञानाकरो राजतां
भूमौ श्रीनवरङ्गनाथकलिजित्कर्मन्दिमौलिर्गुरुः ॥ ५ ॥

श्रीरङ्गेन्द्रयतीन्द्रसादरकृता श्रीकृष्णयोगीश्वर-
श्रीवागीशविवर्धिता यतिनवश्रीरङ्गधाम्ना भृशम् ।
प्रख्यातिं गमिता च कृष्णविभुना प्रेम्णा च संपोषिता
गोष्ठीयं विदुषां चिराजतुतरां वाहास्यकारुण्यतः ॥ ६ ॥

इति षष्ट्यब्दगविद्वत्परिवृढसमितस्समग्रहीद्वृत्तम् ।
संस्थानमहाविद्वत्कविवरशेषः प्रहृष्टतर हृदयः ॥ ७ ॥

करूरु शेषाचार्यः,
संस्थानमहाविद्वान्.

॥ ओंनमश्श्रीवागीश्वराय ॥

कमलाहयास्यकमनीयपादुका-
परिचुम्बिता स्फुरतु वो हृदङ्गणे ।
परिपूर्णशीतकरमण्डलान्तर-
स्फुरदच्छपद्मकरहाटवेदिका ॥ १ ॥

समाधत्तां श्रेयस्सरसललितैः पद्मनिलया-
कटाक्षैः कर्पूरद्रवरुचिभिराम्रेडितगति ।
त्रयीमूलाधारप्रणवमयनादामृतझरी-
निषेकैर्युष्माकं हयवदनहेषाट्टहसितम् ॥ २ ॥

नमामः श्रुत्यन्तद्वितयपथसंस्थापनविधा-
नदीष्णां निर्निद्रप्रशमदमसौशील्यसुरभिम् ।
अखण्डां श्रीशोपक्रममुपचितां नाथयतिरा-
ड्वलन्नामास्माकीं कलिरिपुमहाचार्यसरणिम् ॥ ३ ॥

प्रतिष्ठां लब्धैषा शरदि बहुधान्याह्वयजुषि
व्यतीतायां गोष्ठी जयति यदुपज्ञं कृतधियाम् ।
तमाद्यं रङ्गेन्द्रं कलिमथनमद्य स्मृतवती
रसज्ञा मे किंचिच्चिचालिषति तूष्णीं च भवति ॥ ४ ॥

प्रस्तोतुं कस्तमीष्टे प्रतिनवविकसत्सर्वतन्त्रस्वतन्त्र-
प्रज्ञासौरभ्यमुच्चावचघुमघुमितं यस्य राराज्यते स्म ।
कस्तूरीरङ्गसूरिं यदमलकरुणासागरेन्दुं स्मरन्ती
नैवाद्यापि प्रशुष्यत्यसमयगळिता भारतीबाष्परेखा ॥ ५ ॥

श्रीरङ्गनाथपरकालयतीश्वरेन्दोः
सङ्कल्पकल्पलतिका ननु संसदेषा ।
सद्यःफला यदुकुलोद्वहचामभूभृ-
दौदार्यदोहदविवृद्धतनुस्समिन्धे ॥ ६ ॥

वादेषु शस्त्रनिशिता सरसा कवित्व-
लीलासु तत्त्वपरिमार्गविधौ विनीता ।
छात्रेषु वत्सलतरा सुहिता च लाभे-
ष्वत्राविरस्ति बहुधा विदुषां मनीषा ॥ ७ ॥

कविकुलगुरोः श्रीकृष्णब्रह्मतन्त्रयतीशितु-
र्ललितमधुरा वात्सल्यार्द्रा रसानुभवोज्ज्वला ।
हसितलहरी विद्वद्गोष्ठीविनोदकथास्विह
स्मृतिपथमुपैत्यद्याप्यत्र प्रतिध्वनितेव मे ॥ ८ ॥

स्वाचार्यप्रतिपत्तिपूतचरितैराचान्तनीचाशयै-
र्भूपालैस्सुगृहीतयादवकुलैर्गोपायिता संततम् ।
निर्व्यूढा परकालदेशिकवरैराप्नोतु सेयं सभा
देवस्यास्य समस्तवागधिपतेः कैङ्कर्यसर्वस्वताम् ॥ ९ ॥

राळपल्लि अनन्तकृष्णशर्मा,
आस्थानविद्वान्.

॥ श्रीः ॥

वामाङ्कस्थितवारिराशितनयापाङ्गैस्सहस्पर्धिभिः
यस्योद्यन्निजदेहधामवलयैर्नीत्यावदातं जगत् ।
सोऽयं श्रीपरकालसंयमिवरैराराध्यमानो विभुः
वाहास्योऽनुदिनन्तनोतु जगतां कल्याणपारम्परीम् ॥ १ ॥

विख्यातवैभवजुषां विदुषामुदार-
शास्त्रार्थसारनिकषोपलनिर्विशेषाः ।
श्रीरङ्गनाथपरकालयतीश्वरास्ते
जीयासुरुज्ज्वलयशोमयदिव्यदेहाः ॥ २ ॥

सोऽयं श्रीमुखवत्सरे गुरुवरः कर्णाटभूमीपति-
श्रीमच्चामनृपालमानितकलस्तुर्याश्रमेणाश्रितः ।
भव्यश्रीपरकालपीठविलसन्नव्याभिषेकोत्सवः
विद्याढ्यमतिः कृतीन्द्रमहितोमान्यान्प्रबन्धान्व्यधात् ॥३॥

अस्याः षष्ट्यब्दपूर्तिस्समजनि सदसः हृद्यविद्यालयायाः
रङ्गेन्द्रब्रह्मतन्त्रोत्तमगुरुकरुणालब्धभव्योदयायाः ।
सेयं कृष्णावनीपप्रचुरतरदयोपात्तवैदुष्यमान्यैः
विद्वद्भिर्मानितश्रीः जगति विजयतां प्राज्ञसन्तोषहेतोः ॥४॥

हयाननपदाम्बुजाप्रतिमभक्तिभावोल्लस-
द्विरक्तिमतिवैभवोऽभिनवरङ्गनाथो गुरुः ।
जयत्वमितभाग्यभूर्निगमजातभव्योन्नतिः
यदीयकरुणावशादहरहस्समुज्जृम्भते ॥ ५॥

श्रीमच्छ्रीपरकालसंयमिवरैर्विश्वोदयाकांक्षिभिः
नित्याराधनतोषितो हयमुखो नित्यं प्रसादोन्मुखः ।
श्रीकृष्णक्षितिपालशेखरमणेस्साम्राज्यमव्याहताम्
कीर्तिं चायुरनल्पमुज्वलगुणान् सर्वोत्तरोदाशतात् ॥ ६ ॥

विद्यावतां विविधशास्त्रविचक्षणानां
विद्यार्थिनां च विहिताप्रतिमप्रहर्षा ।
सेयं सभा जयतु नूतनरङ्गनाथ-
कारुण्यपूरपरिवर्धितपण्डितश्रीः ॥ ७ ॥

भव्योदयाय भूयान्नव्यश्रीरङ्गनाथ कलिमथनः ।
स्तव्यगुणोदधिहयमुखदिव्यापाङ्गामृतेन जगदिन्धाम् ॥ ८ ॥

संकीघट्टं—वेंकटाचार्यः,
आस्थानविद्वान्.

खनिजधनानामपि प्रसवितारम्, उत्पत्तिहेतुकम्, नृचक्षसम्—नृणां तत्त्वप्रकाशनेन (अस्मिन् स्थले एतादृशरूपं सुवर्णादिकं भवतीति) विज्ञानमुत्पादयन्तम्, हवामहे—आह्वयामः अथवा स्तुतिं कुर्मः। इति तत्त्वमुपपादयितुं एषा ऋक् समर्था भवतीति प्रतीयते। एतत्सुधियो विभावयन्तु॥

ऋग्वेदे—"अग्निःपृथिव्यां पाजो अश्रेत्। अग्निः भूमौ वर्तमानः बलानि सेवते"॥ इत्यनेन, अन्यत्र "द्युमत्" इति शब्दप्रयोगेन च रत्नकनकादि खनिजजातस्य स्थितिकर्ता दीप्तिकर्तेति च बोध्यते। अत एव श्रीसूक्ते "धनमग्नि (Heat) र्धनंवायु (Air) र्धनंसूर्यो (Light) धनंवसुः (Lustre-producing power or earth) धनमिन्द्रो बृहस्पतिर्वरुणंधनमश्नुते" इत्यनेन (Some spiritual power with the liquid material) एतेषां समवायशक्त्या रत्नादिप्रादुर्भावः (These materials and spiritual powers are responsible for the production of minerals and gems). "सर्वत्र सर्वाः परिमार्गितव्याः सर्वत्र भूमिर्हि वसूनि धत्ते" इत्यादिना च, भूगर्भशास्त्रतत्त्वमत्र सम्यक्सूचितं भवति॥

## वायुः.

३७. मेघादिप्रेरणधारणसमर्थो वायुः। आदिपदेन शैत्याद्युपलम्भनम्। वायोर्वायुसंमूर्छनम्, नानात्वे लिङ्गम्। यस्तादृग्वायुराशिः अभितः पृथिवीं वर्तते, येनायं लोकः प्राणिति, स च स्पृष्टोऽपि सर्वकालम् अल्पत्वान्नोपलभ्यते। तदपरश्च प्रत्यासन्नः सर्वैरुपलभ्यते। असति रूपवद्द्रव्याभिघाते, पर्णादिशब्दसंतानोपि, नभसि तृण-तूल-स्तनयित्नु-विमानादीनां धृतिरपि, (Density of air) वृक्षादिकम्पोपि, स्पर्शवद्वेगवद्द्रव्याभिघातजेन भवितव्यम्। यत्तत्र स्पर्शवेगवद्द्रव्यम्, स

वायुः । धृतिविशेषोपि वायोर्लिङ्गम् । स्तनयित्नुविमानादीनां धृतिः स्पर्शवद्वेगवद्द्रव्यसंयोगजा, चेतनाऽनधिष्ठितद्रव्यधृतित्वात्, प्रवाहे तृणकाष्ठादिधृतिवत् । पक्षिप्रभृतेः प्रयत्नयुक्तम् तदपतनम् । एवं कम्पोपि वायुसत्त्वे लिङ्गम् । इदं रूपवद्द्रव्याभिघातमन्तरेण तृणादौ कर्मस्पर्शवद्वेगवद्द्रव्याभिघातजम् । गुरुत्वप्रयत्नवदात्मसंयोगाजन्यकर्मत्वात्, नदीपूरहतवेतसवनकर्मवत् ॥

आकाशात्तु विकुर्वाणस्सर्वगन्धवहश्शुचिः ।
बलवान् जायते वायुस्सवै स्पर्शगुणो मतः ॥
आवहः प्रवहश्चैव संवहश्चोद्वहस्तथा ।
निवहाख्यः परिवहः परावह इति क्रमात् । (इति मनुः १-२६)

वायुः कथं प्रत्यक्षविषय इति—प्रत्यक्षम् यत्सम्बन्धम् सत् तदाकारोल्लेखविज्ञानम् । न रूपनिबन्धनात्प्रत्यक्षनियमः ॥

३८ वायव्यश्च असाधारणो गुणः अनुष्णाशीतः (Salubrious) । स च निमित्तभेदात्, उष्णः (Hot) शीतः (Cold) सुखकरः (Pleasant) दुःखकरः (Unpleasant) स्निग्धः (Refreshing) विशदः (Pure) खरः (Hard) मृदुः (Soft) रूक्षः (Rough or arid) लघुः (Light) गुरुः (Heavy) कठिनः (Violent) चिक्कणः (Glossy or greasy) श्लक्ष्णः (Fine or charming) पिच्छलः (Lubricious) दारुणः (Fierce or terrible) इति बहुधा स्मृतः । निमित्तं च एवं प्रदर्शितं शुश्रुते—"अन्योन्यानुप्रविष्टानि सर्वाण्येतानि भूतानि निर्दिशेत्" अन्ये पुनः अन्यथा आचक्षते । यथा—आकाशे, पवनदहनतोयानि । वायौ, तेजोम्बुनी भूरपि अणुताविशेषेण । तेजसि, भूरपि धूमादिरूपेण, पानीयमपीति ॥

३९. प्रकृतिभूतस्य खल्वस्यवायोः लोके प्रचरतः, कर्माणी-

मानि भवन्ति। तद्यथा-धरणीधरणम् (Holds earth), ज्वलनोज्वालनम् (Helps combustion), आदित्य, चन्द्र, नक्षत्र ग्रहगणानां सन्तानगतिविधानम् (Regulates continuous movements of planets, stars, etc.,), सृष्टिश्च मेघानां (Generates clouds), अपां विसर्गः (Pours rain), प्रवर्तनम् स्रोतसां (Causes flow in rivers, etc.,), पुष्पफलानाञ्च अभिनिर्वर्तनम् (Effects flowers and fruits in trees etc.,), उद्भेदनं औद्भिदानाम् (Causes the sprouts to come up), ऋतूनां प्रविभागः (Distinguishes the seasons), प्रविभागो धातूनां (Circulates blood etc., in the body), धातुमानसंस्थानव्यक्तिः (Is concerned in the formation of bones etc.,), बीजादिसंस्कारः (Is concerned in fecundation), सस्यादिवर्धनं (Helps the growth in crops), अविक्लेदोपशोषणम् (Absorbs water), अवैकारिकविकारश्चेति (Effects change in the unchanged) ॥

४०. शरीरे पुनः, प्राणनात्प्राणः,—मुखनासिकाभ्यां बहिर्निष्क्रमणशीलः, ऊर्ध्वगतिकः, शरीरान्तस्संचारी वायुः। मलादीनामधोनयनादपानः—मूत्रपुरीषयोरधोनयनहेतुः, अवाग्गतिकः, शरीरान्तस्संचारी वायुः। आहारेण पाकार्थं वह्नेस्समुन्नयनहेतुः समानः — शरीरमध्यगताशितपीतान्नादिसमीकरणकरः (समीकरणं च परिपाककरणं), रस-रुधिर-शुक्र-पुरीषादिकरणम्। नाडीमुखेषु विततनाद्व्यानः सर्वशरीरगः, रसरुधिर-नाडीगतिधारकः। ऋग्वेदे 'अथ यः प्राणापानयोस्संधिः स व्यानः। अग्निर्हि व्यानवृत्त्या वर्तमानेन वायुना मथ्यमानस्सन् जायते। अतः 'परिज्मा' परितोगन्ता वायुः व्यानः, यानि अस्य वीर्यवन्तिकर्माणि—यथा अग्नेर्मन्थनम्, आजेस्सरणम्, दृढस्य धनुषः आयमनम्, अप्राणं अनपानं तानि करोति, अज्मना बलेन युक्तस्सन्।

ऊर्ध्वं नयनादुदानः—'स्पन्दयत्यधरं वक्त्रं गात्रनेत्रप्रकोपनः । उद्वेजयति मर्माणि ह्युदानो नाम मारुतः ॥

४१. अस्य वायोः तिर्यग्गमनं स्वभावः । फूत्कारः कादाचित्कः । सरळगतिः विशेषसामग्रीवशात् । समानजवयोः विरुद्धदिक्प्रसरयोर्वाय्वोस्सन्निपातः संमूर्छनम् । तृणादिगमनेन अनुमितेन सावयविनोर्ध्वगमनमनुमीयते । वायुतत्त्वनिषये श्रुतिः । ऋ अ २, अ १, वर्ग २३, ऋक्, ३, ४.—३. 'वायुर्युङ्क्ते रोहिता वायुररुणा । वायू रथे अजिरा धुरि वोळ्हवे' रोहिता–रोहितवर्णौ अश्वौ क्वचिद्योजयति अरुणा क्वचिदरुणवर्णौ धुरि युङ्क्ते । तथा अजिरा गमनशीलौ वर्णविशेषयुक्तौ कदाचिद्युङ्क्ते ॥

"रश्मिषु चित्रा . . . . . . . ." नानावर्णयुक्तानि आश्चर्यभूतानि । हे वायो दिवोदीप्तारम्, अन्तरिक्षान्मरुतः एतन्नामकान्, मेघं विशीर्य वृष्ट्युत्पादकान् त्वदंशभूतान् देवानजय–जनयसि–उत्पादयासि. किमर्थम्? वक्षणभ्यः–प्रवहणशीलाभ्यः अद्भ्यः वृष्टिलक्षणाभ्यः–नदीभ्यश्च । मरुन्महिमा वृष्टिर्भवति । महानुभावाः मरुतः । (यजुर्वेदे) "उदीरयथामरुतः समुद्रतो यूयं वर्षयथा"। "वाय्वश्वा रश्मिपतयः"। "यदा तु मरुतामनुमते वृष्टिस्सृज्यते तदा विद्युच्छब्दं करोति" विद्युद्वान्पर्जन्यः"। "मरुतो वै वृष्ट्यो ईशते"। "ये महो रजसो विदुः" भाष्यम्—ये मरुतः महो रजसः—महतः उदकस्य वर्षणप्रकारं विदुः। (ऋ. अ. १ अध्या. १ वर्ग ३६) ये नाकस्याधिरोचने दिवि देवास आसते । मरुद्भिरग्न आगहि"। भाष्यम्—ये मरुतः नाकस्याधि–दुःखरहितस्य सूर्यस्योपरि, दिवि–द्युलोके रोचने—दीप्यमाने, ये देवासः—स्वयमपि दीप्यमानाः आसते तैर्मरुद्भिस्सह, हे अग्ने, आगहि–आगच्छ.

४२. प्रातिशाख्ये वर्णोत्पत्तिप्रकरणे—"शरीरे, शरीरं, शरी-

रात्" इति सूत्रत्रयेण शरीरस्थउरःकण्ठशिरोरूपात्मकस्थान-त्रयेषु वायुकार्यं सम्यग्विचारितं भवति। तथैव संगीतशास्त्रे—सप्तस्वरोत्पत्तिप्रकरणे, वायुकर्म यथावन्निर्दिष्टम्। तत्र पंचमस्वरः:-यथा—"वायुः समुद्गतो नाभेरुरोहृत्कंठमूर्धसु। विचरन्पचम-स्थानप्राप्तया पंचम उच्यते" (इत्यमरटीकायां भरतः) "प्राणोः पानसमानश्च ह्युदानो व्यान एव च। एतेषां समवायेन जायते पंचमस्वरः" अस्य जातिः औडवः (संगीतदामोदरे)। एवमेव सर्वेषु शास्त्रेषु वायोः स्वरूपप्रभावादिकं तत्तच्छास्त्रकारैर्नि-रूपितं भवति॥

४३. वायुगुणाः—"प्राग्वातो मधुरः क्षारो वह्निमान्द्यकरो गुरुः। वैरस्य गौरवोष्णानि करोत्यप्स्वोषधीषु च॥ दाक्षिणो मारुतो वल्यश्चक्षुष्यो सस्यघातुकः। मधुरश्चाम्लदाहीच कषाया-नुसरोलघुः। पाश्चिमोऽग्निवपुर्वर्णबलारोग्यविवर्धनः। कषायशोष-णस्स्वर्यो मोचको विशदो लघुः॥ औत्तरेयो मधुस्त्रिग्धो मृदु-र्मधुर एव च। कषायानुसरश्शीतः सर्वदोषप्रकोपनः"॥

४४. एतैर्वायुगुणैरादित्यप्रवृत्त्या च ऋतूनां (Seasons) निबन्धनम्। "आदित्यप्रवृत्तिनिबन्धनमेव विशेषान्वयानिमित्तं वैलक्षण्यम्। तद्वैलक्षण्यहेतुः ऋतुप्रवृत्तिः" तथा च श्रुतिः। साकं जानां सप्तधमाहुरेकजं षड्द्यमा ऋषयो देवजा। वसन्तो वसुभिस्सह। "संवत्सरस्य सवितुः प्रैषकृत्प्रथमस्स्मृतः।" अस्य विवरणम्—वेदभाष्ये द्रष्टव्यम्॥

## Climate.

"स्थात्रे रेजन्ते विकृतानि रूपशः" इति श्रुतेः "जगतस्स्थि-त्यर्थम् शीतोष्णादिरूपेण विलक्षणानि रूपाणि प्रवर्तन्ते"—इति भाष्यम्। अनेन भूमण्डलस्थविविधभागेषु शीतोष्णादितारतम्यं सुधीभिः सूक्ष्मदृष्ट्या विज्ञेयं भवति॥

रसाः (Gases)--अग्निमारुतात्मका रसाः प्रायेणोर्ध्वभाजः। लाघवात्प्लवनत्वाच्च वायोः, ऊर्ध्वज्वलनाच्च वह्नेः। सलिलात्मकाः प्रायेण अधोभाजः। पृथिव्याः गुरुत्वात्, निम्नगतित्वात्सलिलस्य। व्यामिश्रितात्मिकाः पुनः, उभयतोभाजः ॥

## अयस्कान्तः.

४५. क. सू — "मण्यभिगमनं सूच्यभिसर्पणमदृष्टकारणम्।" "दृष्टविलक्षणवस्तुशक्तिभूतादृष्टकारणम्।" अयस्कान्ताभिमुखं यत्सूच्यादेर्गमनं, तृणकान्ताभिमुखं यत्तृणस्य गमनम् (Animal magnetism), तत्सूच्यां समवायिकारणम्। यस्य हितमहितं वा तेन तृणसूच्यादिगमनेन, तददृष्टवदात्मसंयोगात् असमवायिकारणम्। तददृष्टमेव निमित्तकारणम्। यत्तृणजातीयं तृणकान्तम् अयश्च अयस्कान्तमभिसर्पति। तत्र तच्छक्तिः कारणम् (Magnetic power)। सा च मणिसान्निध्यादुद्बुध्यते। प्रयत्नादिवच्च न दृश्यते। "कान्तदेशः (Magnetic field) कान्तप्रसरणानुकूलदेशविशेषः" ॥

विद्युद्विषयः तेजःप्रकरणे तत्र तत्र निरूपित इति बोध्यम्। तत्प्रकारास्तु महासौरे, आरुणे, सामाथर्ववेदयोश्च सावधानमालोकितव्याः ॥

## आकाशम् (Ether).

४६. "प्रतिक्षणपरिणामिनो हि सर्वे भावाः। ते सर्वे आकाश एव भवन्ति" ॥

क. सू. — निष्क्रमणप्रवेशमित्याकाशलिङ्गम्। तस्य गुणः शब्दः। श्रोत्रग्रहणो योऽर्थः स शब्दः। "संयोगविभागाच्छब्दाच्च शब्दनिष्पत्तिः"। यत्र दूरप्रदेशे संयोगविभागाभ्यामुत्पन्नस्य शब्दस्य, वीचीसन्ताननन्यायेन श्रोत्रप्रदेशमाहितस्य

ग्रहणम्; तत्र शब्दाच्छब्दोत्पत्तिः। अत्र पवनादिकं निमित्तकारणम्। पूर्वपूर्वशब्दः असमवायिकारणम्। विशेषणस्य अवच्छिन्नविशिष्टस्य वा जन्यतया नभसः कर्णशष्कुल्यवच्छिन्नस्य जन्यत्वमुपपादयन्तीत्युदयनाचार्याः॥

४७. शब्दः द्रव्याश्रितः गुणत्वात्। तच्च द्रव्यमाकाशम्। ननु विभुनस्तस्य सर्वप्राणिनां शब्दोपलब्धिनिमित्तत्वे, सर्वेषामेव सर्वोपलब्धिप्रसङ्गः, इत्याह "श्रोत्रभावेन" इति॥

४८. शब्दानित्यत्वम् अभिप्रयन्ति न्यायवैशेषिकमतानुयायिनः। यद्यपि "द्वयोस्तु प्रवृत्त्योरभावात्" "प्रथमा शब्दात्" "संप्रतिपत्तिभ्याम्" इति सूत्रत्रयेण पूर्वपक्षिणां नित्यत्वसाधकोपपत्तिं प्रदर्शयति—"तासां त्रिः प्रथमान्वाह त्रिरुत्तमाम्" (ऐ. ब्रा. अ. २-२०-२)। 'प्रवो वाजा अभिद्यवो हविष्मन्तो घृताच्या देवाञ्जिगाति सुम्नयः" (ऋ २-२३-१) इत्यादि श्रुतिप्रमाणञ्च दर्शयत्याचार्याः। तथापि, "सन्दिग्धाः" इति सूत्रेण, "लिङ्गाच्च अनित्यः शब्दः" इति सूत्रेण च, पूर्वपक्षं निरस्य शब्दस्यानित्यत्वं साधयति॥

अन्ये पुनः—शब्दो द्विविधः नित्यः कार्यश्चेति। तत्र नित्यः सर्वदेशव्यापकः, एकः शब्दः ब्रह्मेत्यभिधीयते। तस्मात्कार्यः शब्दः उत्पद्यते। स च व्यक्तः काचित्कः अनन्तभेदश्च। यत्रकुत्रचिद्व्यापकस्याकाशस्य भागे उत्पद्यते, उत्पाद्यते वा। कार्यरूपशब्दः सः स्वजनकस्य नित्यशब्दस्याऽऽत्मशक्त्या योगेन यावदाकाशं व्याप्तुं प्रभवति, प्रक्रियाविशेषेण तदभिव्यक्तिर्भवतीति सर्वमनवद्यं इत्याहुः। इदमेव आकाशवाणीतत्त्वम् (Principle of Radio)॥

४९. कार्यश्च शब्दः द्विविधः। ध्वन्यात्मको वर्णात्मकश्चेति। तत्र ध्वन्यात्मकः भेरीताडनशङ्खध्मानादिषु संयोगेन, वीणावेण्वादिवादने विभागेन च उत्पाद्यते। आद्ये, भेरीदण्डसंयोगः शङ्ख-

मुखसंयोगः इत्यादि निमित्तकारणम् । भेर्याकाशसंयोगः शङ्खाकाशसंयोगः इत्यादि असमवायिकारणम् । उत्तरे, वेणुवीणादिपर्वविभागः निमित्तकारणम् । वेण्वाद्याकाशविभागः असमवायिकारणम् । यत्र तु दूरप्रदेशे संयोगविभागाभ्याम् उत्पन्नस्य वीचीसन्तानन्यायेन श्रोत्रप्रदेशमागतस्य ग्रहणं, तत्र शब्दात् शब्दोत्पत्तिः । कर्णशष्कुल्यवच्छिन्नस्याकाशस्य श्रोत्रत्वेन निष्क्रियतया शब्दप्रदेशगमनस्य, शब्दस्य च गुणत्वेन क्रियाभावात्, श्रोत्र, प्रवेशगमनस्य च संभवात्, अप्राप्यकारितस्य चेन्द्रियाणामनभ्युपगमात्, तद्ग्रहणान्यथानुपपत्त्या, वीचीसन्तानवच्छब्दसन्तानसिद्धिः । अत्र पवनादिकं निमित्तकारणम् । पूर्वपूर्वशब्दोऽसमवायिकारणम् । यद्यदवच्छेदेन शब्दो निष्पद्यते तत्तदवच्छिन्नमाकाशं तु सर्वत्र समवायिकारणम् । द्रव्यस्यैव समवायिकारणतानियमादिति विवेकः । वर्णात्मकं शब्दं प्रति कण्ठादिस्थानस्य वायुनाभिघाताख्यस्संयोगो निमित्तकारणम् । वायुनाभिहन्यमानस्य तस्यैव आकाशेन संयोगोऽसमवायिकारणम् । पूर्वानुभूतवर्णस्मृत्यपेक्षादात्ममनस्संयोगात् पूर्वं वर्णोच्चारणेच्छा । तदनु प्रयत्नः । तमपेक्षमाणादात्मवायुसंयोगाच्च कोष्ठ्ये वायौ कर्म । तेन चोर्ध्वं गच्छन्वायुः पुनः कण्ठादीनभिहन्ति । तेनाभिहताश्चाकाशेन ते संयुज्यन्ते । ततश्च वर्णोत्पत्तिरिति प्रक्रियाभ्युपगमात् । अत्र वर्णात्मकस्य संयोगाच्छब्दाच्छब्दोत्पत्तिः ॥

५०. यत्किंचिन्निमित्तं विना शब्दग्रहणं तु (Radio), समाधिनिष्ठानां योगिनामेव, अथवा शब्दब्रह्ममयीत्यादिना शब्दब्रह्मोपासकानां, "चैतन्यं सर्वभूतानां निर्वृतिर्जगदात्मनाम् । नादब्रह्म तदानन्दमद्वितीयमुपास्महे" ॥ इत्यादिना नादब्रह्मोपासकानां च, साध्यं । तथाचोक्तम्—"श्रोत्राकाशयोस्संबन्धसंयमात् दिव्यं श्रोत्रम्" । उपलक्षणमेतत्, त्वग्वाय्वोः चक्षुस्तेजसोः, अब्रसयोः,

घ्राणभूम्योः, सम्बन्धेषु संयमात् योगिनः श्रोत्रादीनीन्द्रियाणि सूक्ष्मव्यवहितविप्रकृष्टग्रहणसमर्थानि भवन्ति । संयमाविचारस्तु अन्यत्र विज्ञेयः । समाधेः यमनियमादि परिकर्म, यथा गणिते, मिश्रादिव्यवहारगणितनिष्पत्तये सङ्कलनादिकर्म, उपकारकत्वेन प्रधानकर्मनिवृत्तये भवति, एवं द्वेषरागादिप्रतिपक्षभूतमैत्र्यादि- भावनया समुत्पादितम् प्रसादं चित्तम् सम्प्रज्ञातादिसमाधियोग्यं कर्तुं सम्पद्यते । तथाचोक्तं भागवते कृष्णपरमात्मना । (स्कं. ११ अ. १५ श्लो. १४) मय्याकाशात्मनि प्राणो मनसा घोषमुद्वहन् । तत्रो- पलब्धभूतानां हंसो वाचं शृणोत्यसौ ॥ व्याख्या—आकाशात्मा यः समष्टिरूपः, तद्रूपे मयि घोषं नादं उद्वहन् चिन्तयन्, असौ हंसः जीवः, तत्र अकाशे उपलब्धा ज्ञाता सन्, तत्रस्था विचित्रा वाचः शृणोति । यद्वा—तत्राकाशे उपलब्धाः अभिव्यक्ताः याः भूतानां वाचः, ताः दूरतः शृणोति ॥

## आत्मशक्तिः.

५१. सर्वेषां सृष्टिस्थितिव्यापाराणां या याश्शक्तयः अपेक्ष- णीयाः तासां सर्वासां सूर्यशक्तिरेव (Conservation of energy) कारणमिति नवीनभौतिकशास्त्रज्ञाः । तथैव प्राचीना अपि । तथा च श्रुतिः 'सूर्य आत्मा जगतस्तस्थुषश्च' 'एष ब्रह्मा च विष्णुश्च शिवस्स्कंदः प्रजापतिः' (इति रामायणे), 'वाताद्विष्णोर्बलमाहुः' सर्वप्राणिप्रवृत्तिनिबन्धनं शक्त्यात्मकं प्रधानम् वातशब्देनोच्यते । तस्माद्वातात् अस्य विष्णोः व्यापिनः सूर्यस्य बलं प्रवृत्तिसामर्थ्यं आहुः मन्त्रद्दशः इत्यादिना सूर्योपि आत्मशक्त्यैव भासते प्रवर्तते । रसवीर्यपाकैः सर्वान् लोकान् अनुगृह्णाति च । तथा च श्रुतिः 'तमेवभान्तमनुभातिसर्वम् तस्य भासा सर्वमिदम् विभाति' । अन्यच्च 'अक्षराद्दीप्तिरुच्यते' देशतः कालतश्च न क्षरतीत्यक्षरः ब्रह्म, प्रधानपुरुषयोर्नियन्ता ईश्वरः तत्प्रत्यासत्ति विशेषेण प्रकाश-

सामर्थ्यातिशय उच्यते । तदैक्यादेव, देवः सूर्यः धारयति रोधसि । श्रुतिः–'दाधर्थ पृथिवीमयूखैः' 'यद्विष्णोरेकमुत्तमः' यत् विष्णोः विश्वव्यापिनः भगवतः एकं प्रधानं उत्तमं स्वरूपम् व्यापनसामर्थ्यं, तदैक्यसमासादितव्यापनसामर्थ्यातिशयो धारयति जगत् सूर्यः ॥

एतादृशमूलशक्तेः आत्मशक्तिः अथवा चिच्छक्तिः मायाशक्तिः प्रकृतिशक्तिः प्रभावशक्तिः इत्यादिशब्दैर्व्यपदेशः ॥

आत्मसत्त्वे 'अहमितिप्रत्यगात्मनि भावात् परत्र अभावात् अर्थान्तरप्रत्यक्षः' 'व्यवस्थितो नाना' 'शास्त्रसामर्थ्याच्च' इत्यादिप्रमाणम्, तथा च श्रुतिः 'ये समानास्समनसो जीवा जीवेषु मामकाः' 'चेतनश्चेतनानाम्' इत्यादयः, तद्बहुत्वे प्रमाणम् । 'अनेनात्मना जीवरूपेण अनुप्रविश्य नामरूपे व्याकरवाणि इत्याद्यनुप्रवेशश्श्रुतिः अग्नयो वायवश्चैव 'एतदस्य परायणम्' 'इति वत्सस्य वेदनम्' (अत्र भट्टभास्करः) एत एव परमसहायाः त्रिस्थानस्था ह्यग्निवायुसूर्याः परस्परोपकार्योपकारिभावेन लोकत्रयम् धारयन्ति। अन्यच्च 'पतङ्गमुक्तमसुरस्समायया' 'हृदा पश्यन्तिमनसा मनीषिणः' 'समुद्रे अन्तः कवयो विचक्षते' 'मरीचीनां पदमिच्छन्ति वेधसः' (तै–आ–प्र. ३–अ–११ मं, २९). भाष्यम्, पतङ्गः, आदित्यः, तद्रूपेण अक्तम् व्यक्तिं गतम्, असुरस्य, असनकुशलस्य, सर्वोपाधिरहितस्य पदस्य (असेरुरन् इति उरन् प्रत्ययः), मायया ज्ञानेन एनं परमात्मानमेव, आदित्यात्मना व्यक्तिम्, हृदि मानसप्रत्यक्षेणैव पश्यन्ति मनीषिणः मनसो ईशितारः, अन्येतु कवयः मेधाविनः समुद्रे आदित्यमण्डले, अन्तः विचक्षते पश्यन्ति तमात्मानं, ते तु वेधसः विधानकुशलाः प्राज्ञा, मरीचीनां आदित्यानाम् पदम् स्थानम् इच्छन्ति प्रवेष्टुमिच्छन्ति । तथैव स्मृतिः नमस्सवित्रे जगदेकचक्षुषे जगत्प्रसूतिस्थितिनाशहेतवे । त्रयी-

मयायात्रिगुणात्मधारिणे विरिञ्चिनारायणशङ्करात्मने ॥ अन्यत्र— 'सर्वम् भूतजातम् सूर्यस्य रसवीर्यपाकादिभिरनुगृह्यते' इत्यादिना-सूर्यशक्तिपरिणामरूपा अन्या शक्तय इति निष्कृष्टार्थः उपलभ्यते॥

५२. परमात्मा अन्यः सर्वशक्तिमान् । सर्वशक्तिवत्त्वं विभुत्वात् । (क. सू.) "विभुर्वा महानाकाशः तथाचात्मा"। तत्राकाशे सापेक्षत्वं महत्त्वम् । सर्वमूर्तद्रव्यसंयोगत्वं च विभुत्वम् । परमात्मनि निरपेक्षं च महत्त्वम् । सर्ववस्तुवहिरन्तर्वर्तमानत्वं च विभुत्वमिति विवेकः। परात्मसत्त्वे प्रमाणम्—क. सू. "प्रवृत्तिनिवृत्ती च प्रत्यगात्मनिदृष्टे परत्र लिङ्गम्" "तद्वचनादाम्नायस्य प्रामाण्यम्" "असमद्बुद्धिभ्यो लिङ्गम् ऋषेः" (ऋषति साक्षात्पश्यति निखिलं जगद्यः स ऋषिः) ऋषेः परमेश्वरस्य लिङ्गं सद्भावे प्रमाणम् । आत्मतत्त्वज्ञानं विविक्ततत्तत्पदार्थ स्वरूपज्ञानं विना न सुशकम् । "बुद्धिपूर्वा वाकृतिर्वेदे" "ब्राह्मणे संज्ञाकर्मसिद्धिर्लिङ्गम्" "संज्ञाकर्मत्वस्मद्विशिष्टानाम्" इत्यादिभिश्च ईश्वरसत्त्वे वेदानां तदुक्तत्वेन च भवति लिङ्गम् प्रमाणम् इति सुस्पष्टं निरूपितम । श्रुतयश्च "अन्तर्बाहिश्च तत्सर्वं व्याप्य नारायणस्स्थितः" "एको वशी सर्वभूतान्तरात्मा" "एकं रूपं बहुधा यः करोति, तमात्मस्थं योऽनुपश्यन्ति धीराः" तेषां सुखं शाश्वतं नेतरेषां" इत्यादि परस्सहस्रम् ॥

५३. अग्नेरूर्ध्वज्वलनम्, वायोस्तिर्यग्गमनम्, मनसश्चाद्यं कर्म, अदृष्टकारणमिति केचिद्वदन्ति। तत्र अदृष्टम् वस्तुशक्तिः। सा आत्मशक्तिरेव । यद्यपि केचित्तु शक्तिमपि गुणान्तरमाहुः केचित्तु द्रव्यान्तरम्। कार्याणां सूक्ष्मावस्था शक्तिरित्यन्ये। वैशेषिकानां तु यस्य भावस्य या शक्तिः सा तद्रूपैव, न ततोऽतिरिक्तेति न गुणान्तरम्। गुणानां च समवायः तादात्म्येन वर्तमानत्वात्। (Energy is the universal property of matter, that is,

its capacity for doing work) । तथाऽपि, अनन्तशक्तीनां मूलकारणं परमात्मा, अथवा ईश्वरः अथवा आत्मशक्तिः, अथवा चिच्छक्तिरिति वेदान्तिनां सिद्धान्तः । तथा च श्रुतिः । (ऋ. अ १, अ ४, व ३, ऋक् ४.) "तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य विश्वमाभासिरोचनम्" भाष्यम्–हे सूर्य–अन्तर्यामितया सर्वस्य प्रेरक परमात्मन्, संसाराब्धेः तारकोऽसि यस्मात् त्वं विश्वदर्शतः— विश्वैस्सर्वैर्मुमुक्षुभिः दर्शतः द्रष्टव्यः साक्षात्कर्तव्य इत्यर्थः। अधिष्ठानसाक्षात्कारे ह्यारोपितं निर्वर्तते । ज्योतिषः सूर्यादेः कर्ता, तथात्वाम्नायते—"चन्द्रमामनसो जातश्चक्षोस्सूर्यो अजायते"ति । ईदृशस्त्वम्—चिद्रूपतया विश्वम्—सर्वं दृश्य जातम्, रोचनं—रोचमानम् देदीप्यमानं यथा भवति तथा भासि—प्रकाशयसि । चैतन्यस्फुरणे हि सर्वं जगद्दृश्यते ॥

५४. एतेन सर्वं चिच्छक्त्यधीनमिति फलितम् । अतः कालिदासः तां शक्तिं देवतात्वेन विचिन्त्यैवं वर्णयति ॥

सूते जगन्ति भवती भवती बिभर्ति
जागर्ति च क्षयकृते भवती भवानां ।
मोहं भिनत्ति भवती भवती ऋणाद्रि
लीलायितं जगति चित्रमिदं भवत्याः ॥
त्वां व्यापिनीति सुमना इति कुण्डलीति
त्वां कामिनीति कमलेति कलावतीति ।
त्वां मालिनीति ललितेत्यपराजितेति
देवि स्तुवन्ति विजयेति जयेत्युमेति ॥
यामामनन्ति मुनयः प्रकृतिं पुराणीं
विद्येति यां श्रुतिरहस्यविदो वदन्ति ।
व्योमेति बिन्दुरिति नाद इतीन्दुरेखा-
रूपेति वाग्भवतनूरिति मातृकेति ॥

निष्यन्दमानसुखबोधसुधास्वरूपा
विद्योतसे मनसि भाग्यवतां जनानाम् ।
वागीश्वरि त्रिभुवनेश्वरि विश्वमात-
रन्तर्बहिश्च कृतसंस्थितये नमस्ते ॥

॥ ओं तत्सत् ॥

या चिन्ता भुवि पुत्रपौत्रभरणव्यापारसंरक्षणे
या चिन्ता धनधान्यभोगयशसां लाभे सदा जायते ।
सा चिन्ता यदि वेदमातृचरणाम्भोजेक्षणेऽहैतुकी
का चिन्ता यमराजभीमसदनद्वारप्रयाणे नृणाम् ॥

श्री वेङ्कटरमणार्यः.

## महामहोपाध्याय ब्र।। श्री।। विरूपाक्षशास्त्रिणां भावचित्र-प्रकाशनमहोत्सवः.

---

निर्वर्तितः किल महता समारम्भेण श्रावणासितचतुर्थ्यां तत्रभवतां विश्रान्ताद्वैतवेदान्तप्रधानोपाध्यायानां ब्र।। श्री।। विरूपाक्षशास्त्रिणां भावचित्रानावरणमहोत्सवः कलाशालायामस्मदीयायाम्। विविधविद्युद्दीपविडम्बितकदलीरसालरञ्जिते शास्त्रिपादानां शिष्यप्रशिष्यसमुज्जृम्भिते कलाशालीयाध्यक्षोपाध्यायाऽऽस्थानपंडिताऽऽस्थानधर्माधिकारिभिरधिष्ठितेसोत्साहैश्छात्रैराच्छादिते प्रमुखनागरिकराजकीयाधिकारिभिरभिशोभिते कलाशालीयोपन्यासभवनमाण्डिते मण्डपे सकौतुकोत्फुल्लनिमिषनयनसमीक्षमाणसाभिककरताडनधारासहस्रवर्षेण सम्मोदिता अध्यक्षपदमलमकार्षुस्तत्रभवन्तो श्री।। रामरायमहोदयाः। उत्थाय च छात्रमध्यात् कश्चन साहसिकश्छात्रः स्वागतमकार्षीत् अपाठीच्च शास्त्रिमहोदयानां गुणकथनपराणि पद्यानि आशुकविरित्युपाधिधारिणा पि. पि. एस्. उपाध्यायाभिधेन ज्योतिर्विदुषा प्रणीतानि। अनन्तरं च अष्टादशवर्षदेशीयः नवनवोन्मेषधिषणः वेङ्कटरमणनामा स्वरचितकर्णाटभाषामयपद्यैः अस्तौत् शास्त्रिपादान्। तदनु सङ्क्षेपतः जीवनचरितं च शास्त्रिणां पठितम्;—

शास्त्रिपादाः बोम्बाईविभागीयतन्तुपुटभेदन (धारवाड) मण्डलान्तर्गत—हानगल्नगरे (पुराणेषु विराटनगरेति प्रसिद्धे) सञ्जाताः (सन् १८७३)। उपनीताश्च गर्भाष्टमे। नाटकान्तं साहित्यं तत्रैवाधीत्य मद्रप्रांतीयहरपनहल्लिग्रामे तर्कशास्त्रमधीयानाः तन्तुपुटभेदनमभ्युपेत्यान्तं तर्कशास्त्रं सुप्रसिद्धविद्वद्वरतम्मण्णाचार्याणां सविधे अधीत्य फाटकगुरुनाथरावमहाशयानुरोधेन बेङ्गलोरनगरमगुः। तत्रच वेदान्तव्याक-

रणादिशास्त्रेषु परिश्रममावहन्तः सर्. के. शेषाद्रिअय्यर्प्रभृति—राजमान्यानां प्रवचनपाठनेन परिचयं सम्पाद्य शृङ्गगिरिपुरे कञ्चित् कालमध्युवास्य पुनः तन्तुपुरं जगद्गुरुश्रीशङ्कराचार्यपाठशालायां अध्यापकत्वेनागमन् । अवसरे चास्मिन् गदगनगरे सहस्रबुद्धे नारायणराव—प्रभृतिमहाजनसाहाय्येन सोमयागमकुर्वन् । अथाकाल एव सहधर्मचारणीमदर्शनगतामप्यविगणय्य षट्कर्मनिरता एते सच्चिदानन्द श्रीचरणानां ब्रह्मसारूप्येण नितान्तमुद्विग्नाः कञ्चित्कालं मानसिकविश्रमार्थं देशान् सञ्चार्य पुनरपि श्रीचन्द्रशेखरभारतीनामध्यापयितुं शृङ्गगिरिमवापुः।कालेऽस्मिन् वाराणस्यां प्रचलितभारतविद्वन्महामण्डलाधिवेशनाय गत्वा अविचलपाण्डित्यमाहिम्ना विद्यावाचस्पतिरिति, कुम्भाभिषेकमहोत्सवे शृङ्गगिर्यां न्यायपञ्चानन इति प्रशस्तिं, श्रीमत्कर्नाटसिंहासनाधीश्वर श्रीमन्नाल्वाडिकृष्णराजेंद्रास्थाने आस्थानमहाविद्वत्पदमपिं चावापुः । गच्छता कालेन शतकोटेः कुल्याख्यव्याख्यानस्य नौकाभिधं क्रोडपत्रमारचयामासुः । ततः क्रमेण बेङ्गलोर—शङ्करमठे महीशूर—श्रीमन्महाराजसंस्कृतकलाशालायां चाद्वैतवेदान्तशास्त्रमध्यापयन्तः महामहोपाध्यायपदं, महीशूरीयास्थानतः विद्यानिधिरिति च पदं पाण्डित्यानुगुणमलभन्त । प्रसङ्गतः राजकीयवातावरणेषु परम्परागतधार्मिकनिबन्धनविघातकानियमनिर्माणं सप्रमाणं निषिध्य महोपकारं सनातनधर्मप्रणयिनामकुर्वन् । एवं गच्छति काले श्रीवालुकेश्वरभारतीस्वामिनां सकाशादधिगततुरीयाश्रमाः आश्रमधर्माननुतिष्ठन्तः अन्तिमावसरे महीशूरनगरमधिवसन्तः धातृसंवत्सरे (१९३६ सन्) ब्रह्मभावमवापुः ॥

एवं पठिते जीवनचरिते तत्रभवन्तो आस्थानधर्माधिकारिणो शेषवेङ्कटाचलशास्त्रिणः शास्त्रिपादानां व्यक्तिवैशिष्ट्यं विशदयन्तः "मैत्री करुणा मुदितेति तिस्रो वृत्तीरनुचरे"ति योगसूत्रं याथार्थयन्ति स्म शास्त्रिपादाः इत्यवदन् । ततः पौराणिकरत्नं शेषाचार्याः भगवद्गीताया-

मुपवर्णितः स्थितप्रज्ञः कश्चन दृष्टः श्रुतः परिचितो वा वर्तते चेन्मम विरूपाक्षशास्त्रिमहाभाग एव । यथाक्रममाश्रमचतुष्टयमतीत्य जन्मन्येकस्मिन्नेव ज्ञानयोगी कर्मयोगी च भूत्वा निःश्रेयसमवाप्तः कश्चन वर्तते चेत् स एवेत्यब्रुवन् । तदनु सि. रामानुजय्यङ्गार् एम्. ए. महाभागाः शास्त्रिपादानां लौकिकवैदिकव्यवहारचातुरीं कर्मानुष्ठानस्थादर्शतां दारिद्र्ये सांसारिकसङ्कटेपि अविचलमनोवृत्तिं च सरसरमणीयतया प्रादर्शयन् । ततश्च साहित्यरत्नं बि. वेङ्कटरामशास्त्रिणः परिणतवयस्काः शास्त्रिपादानां बाल्येपि दुरवगाहविषयावगाहनलालसतां विमर्शशक्तिं विषयपृथक्करणसरणिं चोपावर्णयन् । अन्ते अध्यक्षमहाशयाः शास्त्रिपादेषु स्वकीयभक्तिं प्रदर्श्य तेषामदर्शने धर्मैकप्राणानां वैदिकसंस्कृतिप्रणयिनां च महती हानिस्समजनीति छात्रैः प्रत्यहं भावचित्रसन्दर्शनेन तेषां गुणाः अनुसंधेयाः इति च सम्भाष्य भावचित्रमनावृतमकुर्वन् ॥

आ. सुब्रह्मण्यशास्त्री.

# विषयसूचना

## स म्पा द की य स मि तिः

१. श्रीमन्तः अर्थशास्त्रविशारदाः विद्यालङ्काराः महामहोपाध्यायाः डाक्टर् आर्. शामशास्त्रिणः, बि.ए., पिएच्.डि., एं.आर्.ए.एस्., विश्रान्त मैसूरु प्राच्यकोशागाराध्यक्षाः शासन-विमर्शशाखाध्यक्षाश्च

२. श्रीमन्तः प्रोफेसर् सि. आर्. नरसिंहशास्त्रिणः एं.ए., मैसूरु महाराजाकालेज् संस्कृत प्रधानोपाध्यायाः

३. पण्डितरत्नं धर्माधिकारिणः ब्र. श्री. काशी शेषवेङ्कटाचल-शास्त्रिणः

४. साहित्यरत्नं महाविद्वांसः ब्र. श्री. क. गोपालकृष्णशास्त्रिणः महाराजाकालेज् संस्कृतपण्डिताः

५. महाविद्वांसः ब्र. श्री. करूरु शेषाचार्याः, महापाठशाला ज्यौतिषप्रधानोपाध्यायाः

६. विद्वांसः ब्र. श्री. एस्. वेङ्कटाचार्याः, महापाठशाला साहित्य प्रधानोपाध्यायाः

७. श्रीमन्तः एस्. बि. कृष्णमूर्तयः, एं.ए., महापाठशालाध्यक्षाः (सम्पादकाश्च)

॥ श्रीः ॥

# श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका

प्रतिमासत्रयं प्रकटीक्रियमाणा

" कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳ समाः "

(ईशोपनिषत्)

सम्पुटम् १५] 1939–March: प्रमाथी–वासन्ती [सञ्चिका १

## सुभाषितानि

हेम्नो भारशतानि वा मदमुचां बृन्दानि वा दन्तिनां
श्रीहर्षेण समर्पितानि गुणिने बाणाय कुत्राद्य तत् ।
या बाणेन तु तस्य सूक्तिविसरैरुट्टङ्किताः कीर्तयः
ताः कल्पप्रलयेऽपि यान्ति न मनाग्मन्ये परिम्लानताम् ॥१॥

शून्यमाकीर्णतामेति मृत्युरप्युत्सवायते ।
आपत्संपदिवाभाति विद्वज्जनसमागमे ॥ २ ॥

आरोग्यं विद्वत्ता सज्जनमैत्री महाकुले जन्म ।
स्वाधीनता च पुंसां महदैश्वर्यं विनाप्यर्थैः ॥ ३ ॥

सुभाषितैः प्रीतिरनुन्नतिश्श्रिया
परार्थनिष्पत्तिपटीयसी क्रिया ।
गुणेष्वतृप्तिर्गुणवत्सु चादरो
निगूढमेतच्चरितं महात्मनाम् ॥ ४ ॥

यद्वञ्चनाहितमतिर्बहु चाटुगर्भं
कार्योन्मुखः खलजनः कृतकं ब्रवीति ।
तत्साधवो न न विदन्ति विदन्ति किन्तु
कर्तुं वृथा प्रणयमस्य न पारयन्ति ॥ ५ ॥

अस्त्यद्यापि चतुस्समुद्रपरिखापर्यन्तमुर्वीतलं
सन्त्यन्येऽपि च तत्र तत्र शतशो दत्तप्रसादा नृपाः ।
एकोऽस्मासु निरादरो यदि भवेदन्यो भवेत्सादरो
वाग्देवी वदनाम्बुजे वसति चेत्को नाम दीनो जनः ॥ ६ ॥

बीजं यस्य चिरार्जितं सुचरितं प्रज्ञा नवीनाङ्कुरः
काण्डः पण्डितमण्डलीपरिचयः काव्यं नवः पल्लवः ।
सूक्तिः पुष्पपरंपरापरिणतिः सोऽयं कवित्वद्रुमः
किं वन्ध्यः क्रियते विना रघुकुलोत्तंसप्रशंसाफलम् ॥ ७ ॥

सि. आर्. नरसिंहशास्त्री,
सङ्गृहीता.

॥ श्रीः ॥

# इन्द्रध्वजो जयार्थिभी राजभिरभ्यर्च्यः

---

पौलस्त्येन समं प्रयुध्य बहुधा खिन्नो वृतश्चिन्तया
रामो यस्य मनुं ह्रदाद्रमनघं कुम्भोद्भवोदीरितम् ।
जप्त्वा तेन हृतव्यथः प्रमुदितः सन्धाय चापे शरं
पौलस्त्यं प्रजघान सोऽवतु सदाऽऽदित्यो जगद्बान्धवः ॥

प्रष्ठाः—नेदमप्रत्यक्षं नाम सर्वेषां प्रेक्षावताम् यद्गणित-जातक संहिताह्वयैस्त्रिभिः स्कन्धैः परिमण्डितं ज्योतिश्शास्त्रमिति। तत्र संहितास्कन्धे प्रतिपादितं नृपोपयुक्ततममिन्द्रध्वजमधिकृत्य साम्प्रतं किञ्चित् प्रस्तूयते । तत्कृपया गुणगृध्नुभिः सुधीभिरादर-णीयमिति सप्रश्रयमभ्यर्थये ॥

अत्रेयं काचन कथा श्रूयते । पुरा सुराः समरे दैत्यैर्भृशमुप-द्रुताः प्रतियोद्धुमशक्नुवानाः कान्दिशीकाः कमलासनं शरणमुप-जग्मुरस्मानशरणांस्त्रायस्वेति । ततः स विरिञ्चो देवानुवाच । क्षीरोदमलंकरिष्णुर्भगवान् विष्णुर्वः संयुगे शत्रुञ्जयं शक्रध्वजं दास्यतीति । तदनु सेन्द्रा गीर्वाणाः क्षीराब्धिमुपगम्य तुष्टुवुः सर्व-लोकशरण्यं भगवन्तं कमलाजानिम् । ततस्तेषां स्तुतिभिः प्रहृष्टो भक्तवत्सलो मधुरिपुरादिशत् तेभ्यः शक्रध्वजम् । अथ सुरेशो मणिखचितमष्टचक्रं स्यन्दनमधिष्ठितं दीप्रतमं विष्णुतेजोमयं तं ध्वजमधिगम्य नितरां मुमुदे । अनन्तरं किङ्किणीस्रक्छत्रभूषादि-मण्डितेन प्रांशुना तेन केतनेन जिष्णुरवधीदसुरान् समूलघातम् ।

तदनु सुत्रामा चेदिजनपदेशायोपरिचरवसवे प्रादाद्वैणवं तं ध्वजम्। स नृपः शक्राद्वामुत्तंसयंस्तं केतुं सभक्तिप्रकर्षं विधिवदर्चन्नभिपेदे बहून् कामान्। एवमन्येऽपि ये भुवि नृपास्तमर्चिष्यन्ति तेऽप्य-प्रतिहताज्ञा वसुमन्तस्तदीयाः प्रजाश्च निर्भया नीरोगाः प्रभूता-न्नाश्च भविष्यन्ति। ध्वज एवाभिधत्ते शुभमशुभं च फलं निमित्तैः॥

अथ तादृशध्वजविधानमभिधीयते संक्षिप्य यथाशास्त्रम्। शुभेषु करण–दिन–तारक–मुहूर्तेषु विपिनमधिगच्छेद्दैववित् त्वष्टा च। तत्र शक्रध्वजाय देवालय–पितृवन–वल्मीकादिसमुद्भवाः सकोटरा ऊर्ध्वशुष्काः कण्टकिनो वह्निदग्धा वा तरवो नोपयु-ज्यन्ते। अर्जुनाजकर्णप्रियकधवोदुम्बराः पञ्चैव द्रुमास्तत्र प्रश-स्यन्ते। एष्वेकतमवृक्षावस्थानस्थलं दैवज्ञेनावगम्य पुरोधा निशि सितायामसितायां वा भुवि प्ररूढं तं तरुं स्पृष्ट्वा मन्त्रद्वयमिदं पठेत्। तच्चैवम्॥

"यानीह वृक्षे भूतानि तेभ्यः स्वस्ति नमोऽस्तु वः।
उपहारं गृहीत्वेमं क्रियतां वासपर्ययः॥
पार्थिवस्त्वां वरयते स्वस्ति तेऽस्तु नगोत्तम।
ध्वजार्थं देवराजस्य पूजेयं प्रतिगृह्यताम्"॥ इति॥

एवं पुरोधसाऽभिमन्त्रितं तं शाखिनमरुणोदयकाले वर्धकिरुदङ्मुखः प्राङ्मुखो वा छिन्द्यात्। तदात्वमेवं कानिचिन्निमित्तानि ज्ञेयानि। तथाहि। छेदनावसरे परशोर्जर्जरध्वनिरनिष्टः। स्निग्धो घनश्च नादः शुभः। द्रुमान्तरासंसक्तस्याभग्नस्य च वृक्णस्य तस्य विट-पिनः पूर्वस्यामुत्तरस्यां वा पतनं नृपजयदम्। इतोऽन्यदशुभ-मिति। अमूलमशाखं च निकृत्तं किञ्चित्तष्टं यष्ट्याकारं च तं तरुं शकटेन पुरद्वारं नयेत्। नयनावसरेऽप्येवं निमित्तमूह्यम्। शकटेऽरस्य नेम्या वा भङ्गे सेनानाशः। अक्षतदग्रकीलयोर्भञ्जने

धनवर्धक्योः क्षय इति । तदनु राजा पौरैर्दैवज्ञैः सचिवैर्विप्रैश्च परिवृतो भाद्रशुक्लाष्टम्यां श्वेतचित्रपताकालंकृतं संमार्जितपथं नटाद्याकीर्णचतुष्पथं च पुरं नवांशुकवेष्टितां माला-गन्ध-धूप-युतां तां यष्टिं मङ्गल-शङ्ख-तूर्यादिस्वनैः सार्धं प्रवेशयेत् । यष्टिप्रवेशनावसरे निमित्तमिदं वेद्यम् । सा यष्टिर्वृषादिभिर्निपातिता यदि भयम् । तदा बालानां करास्फोटे प्राणिनां कलहे वा सति संग्राम इति ॥

अथ तक्षा तां यष्टिं मुहुः सम्यक् तष्ट्वा तां तिर्यगायाममध्ये पार्श्वद्वयग्राहकयन्त्रसंसक्तां कुर्यात् । नृपो भाद्रशुक्लैकादश्यां निशि जागरां कुर्यात् । तस्मिन्नेव दिवसे सितोष्णीषो राजपुरोधा वह्निं वैष्णवैरैन्द्रैश्च मन्त्रैर्विधिवज्जुहुयात् । तदाग्नितः सांवत्सरो निमित्तानि सूचयेत् । तद्यथा । आतपत्राद्याकारः सुगन्धः स्निग्धो निरन्तरो ज्वालावान् वाग्निः शुभकृत् । अतोऽन्योऽनिष्ट इति । अग्निनिमित्तं सविस्तरमुपपादितं योगयात्रायामत्रभवता वराहमिहिरेण । तथापि किञ्चिदिहोच्यते । होमान्ते प्रदक्षिणमुज्ज्वलार्चिर्हुताशो राज्ञो धराधिपत्यदः । स्वर्णाशोक, कुरण्टक, पद्म, वैदूर्य, सवर्णो रथार्णवमेघदान्तिनिस्वनो वा वह्नी राज्ञो जयद इति । ततस्तन्मासशुक्लद्वादश्यां श्रवणयोगे तदयोगे वा भूपो विप्रान् मृष्टान्नभक्ष्य-पायसादिभिर्दक्षिणाभिश्च प्रतोष्य शक्रकुमारी-पिटक-लोकपालेक्षुदण्ड फल-केतु-माला-कदली-भूषितं पटह-मृदङ्ग-शङ्ख-भेर्यादिमङ्गलवाद्यनिगमघोषपुरस्कृतं शक्रध्वजाह्वं तत् काष्ठं नातिद्रुतं नातिविलम्बितमध्वस्तमाल्यभूषणादिकमाच्छिन्नबन्धनरज्जुकं च ग्राहकयन्त्रादुत्थापयेत् । तत्र शोभायै नन्दोपनन्दाजयाविजया वसुन्धराभिधा दारुमय्यः सुन्दर्यः पञ्चेन्द्रकुमार्यः कार्याः । तत्परिमितिरेवम् । अभीष्टा ध्वजामितिः स्वतुरीयांशोना नन्दा स्यात् । ध्वजमानार्धमितोपनन्दा भवेत् । नन्दोपनन्दे स्वस्वषोड-

शांशाधिके यदि क्रमाज्जयाविजये भवतः। जयाविजये निजनिज-षोडशलवयुते चेद्वसुन्धरासंज्ञे स्याताम्। अत्र मानभेदेन वसु-न्धरासंज्ञाद्वित्वेऽपि नामसाम्यात्तदेकत्वमभिसन्धाय पञ्चेन्द्रकुमार्य-इत्युक्तमिति बोध्यम्। आसां मध्ये शक्रमाता निवेश्या। सा च स्वाष्टांशाधिकवसुन्धराप्रमितेति ॥

पुरा शक्रध्वजाय प्रीतैर्दैवैर्यानि भूषणानि दत्तानि तानि तत्र धार्याणि। तानि चैवम्—

१ प्रथमं रक्ताशोकसमं चतुरश्रं च भूषणं प्रत्तं विश्व-कर्मणा।
२ द्वितीयं रशनारूपं नानावर्णमदायि ब्रह्मणा शङ्करेण च।
३ तृतीयमष्टाश्रं नीलरक्तमिन्द्रेण।
४ तुरीयमसितं तेजिष्ठं मसूरकं यमेन।
५ पञ्चमं मञ्जिष्ठाभं षडश्रं वरुणेन।
६ षष्ठं मयूरपक्षचितं मेघाभं केयूरं वायुना।
७ सप्तमं बहुचित्रं केयूरं स्कन्देन।
८ अष्टमं स्वज्वालानिभं वर्तुलं हव्यभुजा।
९ नवमं वैदूर्यप्रभं ग्रैवेयकं सुत्राम्णा।
१० दशमं रथचक्राकारं कान्तिमद्द्रविणा।
११ एकादशं पद्मोपममुद्धंशसंज्ञं विश्वेदेवैः।
१२ द्वादशं नीलोत्पलाभमृषिभिः।
१३ त्रयोदशं लोहितवर्णं गुरुभृगुभ्यामिति।

यद्यद्भूषणं येन येन वितीर्णं तत्तत्तद्दैवतमित्यवगम्यम्। भूषण-पर्यायः पिटक इति प्राञ्चः ॥

अथ भूषणप्रमाणानि। प्रगृहीतेन्द्रध्वजपरिमाणत्र्यंश एव प्रथमस्य परिधिर्ज्ञेयः। प्रथमपिटकः स्वाष्टांशहीनो द्वितीयस्य परिधिः। द्वितीयो निजाष्टमलवावियुतस्तृतीयस्य परिधिः।

एवमग्रेऽप्यूह्यम्। भाद्रपौर्णमास्याममीभिः पिटकैः शक्रकेतुं प्रपूर्य मनूक्तानेतान्मन्त्रानुपोषितो नृपतिः पठेत्। ते तु—

"हरार्कवैवस्वतशक्रसोमैः
धनेशवैश्वानरपाशभृद्भिः।
महर्षिसङ्घैः सदिगप्सरोभिः
शुक्राङ्गिरःस्कन्दमरुद्गणैश्च ॥ १ ॥

यथात्वमूर्जस्करणैकरूपैः
समर्चितस्त्वाभरणैरुदारैः।
तथेहतान्याभरणानि यागे
शुभानि संप्रीतमना गृहाण ॥ २ ॥

अजोऽव्ययः शाश्वत एकरूपो
विष्णुर्वराहः पुरुषः पुराणः।
त्वमन्तकः सर्वगतः कृशानुः
सहस्रशीर्षः शतमन्युरीड्यः ॥ ३ ॥

कविं सप्तजिह्वं त्रातार-
मिन्द्रं स्ववितारं सुरेशम्।
ह्वयामि शक्रं वृत्रहणं
सुषेणमस्माकं वीरा उत्तरा भवन्तु" ॥ ४ ॥ इति ॥

इत्थमुत्थापितं मघवतः केतुमष्टासु दिक्षु दृढै रज्जुभिर्बध्नीयात्। अथोन्नमिते तस्मिन् केतने शुभाशुभज्ञानमेवमुक्तम्। तत्रावस्थितैर्मांसाशखगोलूककपोतकाककङ्कैर्नृपतेर्भयम्। चाषेण युवराजभीतिः। श्येनेन नयनोपघातः। छत्रस्य भङ्गे पतने वा भूभुजो हानिः। सरघया स्तेनसाध्वसम्। तदूर्ध्वमुल्काशन्योः पातेन क्रमात् पुरोधोराज्ञयोरत्ययः। पिटकाधःपातेन वग्रहः। तस्मिन् धूमावृते कृशानुभीः। शक्रकुमार्या भङ्गे वाराङ्गनानां हानिरिति ॥

एवं महीशः स्वबलाभिवृद्धये रिपुविजयाय च भाद्रशुक्लद्वादशीप्रभृति दिनचतुष्टयं यावत् समुत्थापितमेव वासवध्वजमभ्यर्चेत्। ततः पञ्चमेऽपि दिवसे प्रकृतिभिः सार्धमभिपूज्य तं विसृजेत्। बहुतमकालसमागतोऽयमिन्द्रध्वजवृत्तान्तः। तदुक्तं श्रीरामायणे किष्किन्धाकाण्डे षोडशे सर्गे। "इन्द्रध्वज इवोद्धूतः—विभ्रंशितेन्द्रध्वजवत् क्षितिं गतः"—इति च। रघुवंशे तुरीयसर्गे तृतीयपद्ये श्रीमान् कालिदासोऽपि कथयति—

"पुरुहूतध्वजस्येव तस्योन्नयनपङ्क्तयः।
नवाभ्युत्थानदर्शिन्यो ननन्दुः सप्रजाः प्रजाः" इति॥

अनया मघवत्केतनयात्रया महती वृष्टिरपि स्यादिति लोके महीयसी प्रतीतिः। तदुक्तं भविष्योत्तरे। "एवं यः कुरुते यात्रामिन्द्रकेतोर्युधिष्ठिर। पर्जन्यः कालवर्षी स्यात् तस्य राज्ये न संशयः"—इति। एवमुपरिचरवसुना भूभृता प्रवर्तितमिमं समुदाचारं सभक्तिप्रकर्षमनुतिष्ठतां नृपाणां न किमपि रिपुभयं भवेदिति सांहितिकानां राद्धान्त इति सर्वं निरवद्यम्—

इति शक्रध्वजलक्ष्म ग्रन्थानभिवीक्ष्य सावधानमनाः।
समगृह्णात्कृष्णनृपास्थानमहापण्डितः कविः शेषः॥

करूरु शेषाचार्यः,
महाविद्वान्, ज्योतिश्शास्त्रप्रधानोपाध्यायः

# उत्तररामचरिते रसविवेचनम्

अथ श्रीमदुत्तररामचरिते भवभूतिः कं रसं मुख्यतो व्यक्तव्य-करोदित्यत्र बहोः कालादपि महती विमतिर्वरीवर्ति । तत्र तावन्मुख्यतो मतद्वैधं दृश्यते, केचनावोचन्—तत्र शृङ्गारत्वव्याप्यधर्मावच्छिन्नः करुण-विप्रलम्भ एव रस इति । अपरे पुनस्सङ्गिरन्ते—रसत्वव्याप्यधर्मावच्छिन्नः करुण एव स इति । सम्प्रति तु नूत्नं किञ्चिदपि मतं शृणुमः—तत्र न विप्रलम्भः, न वा केवलं करुणः, किन्तु सम्भोगशृङ्गारः, सङ्गमतः पूर्वन्तु करुण एवेति । एतेषु खलु कतमं वरिष्ठमिति निरूपयितुमयं यत्नः ॥

तत्राद्यं मतमनुरुन्धानाः नैकतन्त्रवेत्तारः साहित्यरत्नं क. गोपालकृष्णशास्त्रिणः। ते स्वस्यामेव पत्रिकायां* कुन्दमालाविमर्शात्मक-प्रबन्धे महता ग्रन्थसन्दर्भेणामुं विषयं हठादाकृष्योत्तररामचरिते करुण-विप्रलम्भ एव रसः, न करुण इति प्रतिजानते स्म। तेषां मतन्त्वनुप-दमेव विवेचयिष्यते । सम्प्रति करुणविप्रलम्भस्य किं निष्कृष्टं लक्षणं, तस्यात्र नाटके समन्वयो भवति न वेति तावत्परीक्ष्यते ॥

## १. विप्रलम्भकरुणलक्षणम्

अत्र बोधसौकर्याय रसविभागप्रणाली स्तोकं प्रदर्श्यते । रसः खलु गोस्वामिपादैः षोडशधा, कैश्चिच्चतुर्धा, रत्नकोशकारादिभिर्नवधा, भरत-रभसादिभिर्दशधा वा विभक्तोपि बहुसंमत्याष्टविधः—शृङ्गार-हास्य-करुण-रौद्र-वीर-भयानक-बीभत्स-अद्भुतभेदात् । तत्र शृङ्गार एवादिमो रस आलङ्कारिकाणां नये । तत्र शृङ्गपदमालङ्कारिकाणां मते कामो-द्रेकार्थे रूढः, तं कारणतया ऋच्छति इति व्युत्पत्त्या कामोद्रेक (सम्भोगेच्छा) कारणको यो रसः स शृङ्गारः, तथा च सम्भोगेच्छाविष-

* सम्पु. ४, सं. ४, १९२८ अक्टोबर्—१९२९ जुलै ५, ३ सञ्चिकयोः.

यकज्ञानजन्यत्वविशिष्टरसत्वमेव शृङ्गारस्य लक्षणं पर्यवस्यति* । स च द्विविधः—विप्रलम्भशृङ्गारः सम्भोगशृङ्गारश्चेति । विप्रलभ्यते मदनेन प्रतार्यते नायिका नायको वा यस्मिन्स विप्रलम्भः । सम्भुज्यते अन्योन्यमुपभुज्यते मदनो यस्मान्निति सम्भोगः । अद्य विप्रलम्भ एव निरूपणीयः । यस्मिन् शृङ्गारे नायकनायिकयोरन्योन्यमनुरागः नितान्तमभिवृद्धिं गतः, अथच केनाचित्प्रतिबन्धकेन नायकः नायिकां, नायिका वा नायकं प्राप्तुं न समर्था तत्रैव स रसः । एवं च सङ्गमविरोधिवस्तुसमवधानविशिष्टरतिविषयकस्वादत्वमेव तस्य लक्षणम् । सोऽपि चतुर्विधः† पूर्वरागः, मानः, प्रवासः, करुण इति । पूर्वरागादीनां लक्षणानि आकरतोऽवगन्तव्यानि । तत्र करुणविप्रलम्भ एव खल्विदानीं लक्षणीयः । तल्लक्षणे तत्स्थायिभावेपि मतभेदो दृश्यते ॥

i. तत्र प्रसिद्धसाहित्यदर्पणकारः—

यूनोरेकतरस्मिन् गतवति लोकान्तरं पुनर्लभ्ये ।
विमनायते यदैकः तदा भवेत् करुणविप्रलम्भाख्यः ॥

(सा. द. तृ. प. १९)

---

* "शृङ्गं हि मन्मथोद्भेदः तदागमनहेतुकः ।
. . . . . रसः शृङ्गार इष्यते ॥"
(सा. द. तृ. प. १८३ पद्यम्)



युवकयुवत्योर्मध्ये एकतरस्मिन्मृते सति तस्यैव पुनर्लभ्यतायां जीविता व्यक्तिः तां मृतव्यक्तिमुद्दिश्य विमनीभवति---पुनर्लाभविषयककरुण विमिश्रितः रतिस्थायिभावकः करुणविप्रलम्भ इति तदर्थः । इदमपि लक्षणं यथाश्रुतम् ; तथा हि, अस्य रसस्य हि स्थायीभावः शोकः खलु वक्तव्यः । स द्विविधः, प्रत्याशाकालिकः, तदभावकालिकश्चेति । प्रत्याशाकालिकश्चेन्न तावद्दुःखं जनयेत् । तदभावकालिकस्तु महदेव दुःखमुत्पादयति । अनुभवसिद्धोऽयमंशः ; करुणविप्रलम्भस्य स्थायिभूतश्शोकः सङ्गमप्रत्याशाकालिकोनचेद्रसत्वव्याप्यकरुणत्वावच्छिन्नाद-विशेषप्रसङ्गः । भाविरत्या तच्छोकस्य तारतम्यमिति न संभवति । उत्तरत्र रतिर्भवतीति विनिश्चय एव तथा वक्तुं शक्यत्वात्तथाचेत्सङ्गम-प्रत्याशाया एव शब्दान्तरेणोक्तं भवति । तथाच केवलकरुणवैलक्षण्याय करुणविप्रलम्भलक्षणे सङ्गमप्रत्याशाकालिकरुणविमिश्रितरतिरेव निवेश-नीया । दर्पणकारोपि स्वोपज्ञतद्व्याख्यायामेवमेवाचख्यौ* "पुनरलभ्ये" इति तदीयप्रतीकस्यापि पुनरलभ्यत्वनिश्चय इत्येवार्थः ॥

ii रसतरङ्गिणीकारोप्येवमेवाभिप्रैति । "इष्टसमीहाजनितमनो-विकृतेरुक्तत्वा" दिति, "यत्र च मृत एव जीविताशा तत्र शृङ्गार एव रसः" इति चोक्तत्वात् † । एवं तेनैव तद्ग्रन्थे "शोकस्य परिपोषः

---

* "किञ्चात्राकाशसरस्वतीभाषणानन्तरमेव शृङ्गारः । सङ्गमप्रत्याशाया रते-रुद्भवात् । प्रथमन्तु करुण एवेत्यभियुक्ता मन्यन्ते ।"---सा. द. तृ. प. १९६.

† "इष्टविश्लेषजनितो रत्यनालिङ्गितः परिमितो मनोविकारश्शोकः । न चेष्ट-विश्लेषजनितविप्रलम्भस्य करुणरसत्वापत्तिः, तस्य रत्यनालिङ्गितत्वात् । न च रतिः प्रीतिस्तया विना शोकोपि नोत्पद्यत इति वाच्यम् । इष्टसमीहाजनितमनोविकृते-रुक्तत्वात् । कुमारसम्भवे रत्याः, कादम्बर्यां महाश्वेतायाः, रघुवंशे अजस्य प्रलापे करुण एव रसः तत्र तत्र बाधनिश्चयेनेष्टजनवस्तुसमीहाया अभावात् । यत्र च मृत एव जीविताशा तत्र शृङ्गार एव रसः । बाधसन्देहस्य ग्राह्यसन्देहपर्यवसिततया समीहाया अप्रतिबन्धकत्वात्"---रसतरङ्गिणी.

करुणः। आशाविच्छेदे सति सर्वेन्द्रियविक्रमो वा। न च विप्रलम्भेतिव्याप्तिः। तत्रेष्टाशायास्सत्वात्। तद्विच्छेदे तु न विप्रलम्भः करुण एवे" ति विस्पष्टमुक्तम् ॥

iii रसार्णवसुधाकारोप्येवमेवाचख्यौ—

"द्वयोरेकस्य मरणे पुनस्सञ्जीवनावधौ।
विरहः करुणो न स्यात्सङ्गमाशानुवर्तनात् ॥

अत्राकाशसरस्वतीप्रत्ययेन रतेर्विप्रलम्भः कृशत्वाद्यनुमितैः ग्लान्यादिभिर्व्यभिचारिभावैः पोषितस्समयपरिपालनादिरूपैरनुभावैर्व्यज्यते" इति।

एवं—

अथ मदनवधूरुपप्लवान्तं
व्यसनकृशा परिपालयाम्बभूव।
शशिन इव दिवातनस्य रेखा
किरणपरिक्षयधूसरा प्रदोषम् ॥

इति कुमारसम्भवपद्यमुदाहृत्य तदुपरि निजाभिसन्धिमुदागिरत्। हरकोपानलेन भस्मीभूतं मदनं प्रति रतिर्विलपति। तदा हि गगनसरस्वती प्रियसमागमो भवेदिति गदति। तत्कालमारभ्य रत्यनुभूतश्शोकः विप्रलम्भ इति रसार्णवसुधाकरभावोऽवसीयते। अस्यापि प्रत्याशासहितशोकसंवलितैव रतिर्विप्रलम्भलक्षणे निवेशनयेति भावः स्पष्टमवगम्यते ॥

iv रसगङ्गाधरकारश्च करुणविप्रलम्भयोर्वैशेष्यकथनवेलायामेवं निरूपयति—"मृतत्वज्ञानदशायां तु रतिपोषितस्य वैक्लव्यस्येति करुण एव। यदा तु सत्यपि मृतत्वज्ञाने देवताप्रसादादिना पुनरुज्जीवनं कथञ्चित्स्यात्, तदालम्बनस्यात्यन्तिकानिरासाभावाच्चिरप्रवास इव विप्रलम्भ एव न करुणः"। अत्र "पुनरुज्जीवनज्ञानं सङ्गमप्रत्याशा कथञ्चित्—

देवताप्रसादादिना" इत्यनेन सङ्गमप्रत्याशायामेव विप्रलम्भ इति मनुते रसगङ्गाधरकारः ॥

v रसचन्द्रिकाकारस्तु स्पष्टमेव ब्रवीति "सप्रत्याशो विप्रलम्भः निष्प्रत्याशः करुण" इति । एतदुपरितनतदीयवाक्सरण्या * विप्रलम्भे रति शोकयोरुभयोरपि स्थायिभावता रसचान्द्रिकाकारेण समादृतेति भाति । पूर्वोदाहृतमतेषु तु केवलं रतिरेव स्थायिभूता । केवलशोकानुभवे करुणः, केवलरत्यनुभवे सम्भोगशृङ्गारः, उभयोःस्थायिभूतयोस्सम्मेलने करुणशृङ्गाराभ्यां विलक्षणः विप्रलम्भनामा कश्चनाभिनवो रस आविर्भवतीति रसचान्द्रिकाकाराभिप्रायः । एवं च विप्रलम्भे प्रत्याशासाचिव्यमयमपि विस्पष्टमङ्गीकरोतीत्यत्र न कोपि विवदति। परन्त्वात्राविसंवादेपि शोकरत्युभयसम्मिश्रणेन कश्चनाभिनवो रस आविर्भवतीत्यत्र परं बहवः विप्रतिपद्यन्ते । तदास्ताम् । एतावता प्रबन्धेन करुणविप्रलम्भलक्षणं नायकनायिकयोरेकतरस्मिन्लोकान्तरंगते लोकान्तर गतस्य कथांचित् पुनरागमननिश्चयेन तत्सङ्गमप्रत्याशया विरहकाले नायकः नायिका वा विमनायते-तादृशशोकविमिश्रितरतिरेवेति निष्कृष्टं पर्यवस्यति ॥

## २. लक्षणसमन्वयविचारः.

अद्य तादृशं लक्षणमुत्तररामचरिते समन्वेतुमर्हति नवेत्येतद्विवेच्यम् । तदर्थं त्रयो विषया विचारणीया भवन्ति—

१. श्रीरामनिर्वासिता सीता भूतले अवर्तत उत लोकान्तरं गता ?

---

* विप्रलम्भे जीवननिश्चयेन भाविसम्भोगरूपेष्टसाधनताज्ञानसत्त्वात्तदधीना तत्समीहानुवर्तते । करुणे तु जीवननिश्चयाभावेन भाविसम्भोगरूपेष्टसाधनताज्ञानाभावात्तदधीना तत्समीहा निवर्तते . . . . यत्र तयोरन्यतरस्मिन्जीवति मृते वा जीवितसन्देहस्तत्र विनिगमनाविरहेणोभयोरपि प्राधान्यादुभयस्थायिकः करुणविप्रलम्भाख्योऽतिरिक्त एव रसः ।"

२. सीता मृता जीविता वेत्यत्र दृढप्रत्यय आसीद्वा रामादेः ?

३. रामस्य सीतापुनःसङ्गमाशा समासीन्न वा ?

(i) रामानिर्वासिता सतीसन्नप्रसवातिदुःखसंवेगादात्मानं भागीरथीप्रवाहे निक्षिप्तवती। तत्रैव तदैव पुत्रद्वयं प्रासूत। तदनु भूमिभागीरथीभ्यां रसातलं नीता सीता पुनस्समागमवेलायां भूतलं प्रति समागतेति उत्तररामचरितादवगम्यते *

सप्तमेऽङ्केपि "मन्थादिव क्षुभ्यति गाङ्गमम्भोव्याप्तं च देवर्षिभिरन्तरिक्षम्। आश्चर्यमार्या सहदेवताभ्यां गङ्गामहीभ्यां सलिलादुपैति॥" इति लक्ष्मणः अन्तर्नाटके प्रावोचत्। एतेन प्रसवानन्तरं सीता लोकान्तरं प्रति गता नाटकान्ते पुनस्समागमकाले भूतलं प्रत्यागतेति सिद्धम्॥ "एहि जात कुश, एहि जात लव, चिरस्य मां परिष्वजेथां लोकान्तरादागतां जननीं" इत्यपि लोकान्तरगततां स्मारयति॥

(ii) सम्प्रति सीता मृता जीविता वेति विचार्यते — ग्रन्थविमर्शने सीता मृतेत्येव दृढनिश्चया मतिरासीद्रामादेरिति ज्ञायते। तथाहि —

१. प्रथमाङ्के सीतापरित्यागसङ्कल्पोदयकाल एव राम एवं वदति—

"शैशवात्प्रभृति पोषितां प्रियां सौहृदादपृथगाश्रयामिमाम्।
छद्मना परिददामि मृत्यवे सौनके गृहशकुन्तिकामिव॥

किञ्च—

"विस्रम्भादुरसि निपत्य जातनिद्रामुन्मुच्य प्रियगृहिणीं गृहस्य लक्ष्मीं॥

---

* अस्ति खलु वाल्मीकिवनोपकण्ठात्परित्यज्य निवृत्ते सति लक्ष्मण सीतादेवी प्राप्तप्रसववेदनमतिदुःखसंवेगादात्मानं गङ्गाप्रवाहे निक्षिप्तवती। तदैव दारकद्वयं च प्रसूता भगवतीभ्यां पृथ्वीभागरथीभ्यां उभाभ्यां अभ्युपपन्ना रसातलं नीता। स्तन्यत्यागात्परेण दारकद्वयं च प्राचेतसस्य महर्षेर्गङ्गादेव्या समर्पितं स्वयम्। उ. रा.

आतङ्कस्फुरितकठोरगुर्वीं क्रव्याद्भ्यो बलिमिव दारुणः
क्षिपामि" ॥

—इति रामः रोदिति। एतेन सतीमृतिभीतिरासीदिति सिद्ध्यति।

२. द्वितीयाङ्के शम्बूकहननादनन्तरं पञ्चवटी निकटमागतो दाशरथिः —

"यस्यान्ते दिवसास्तया सह मया सीता यथा स्वे गृहे
यत्सम्बन्धकथाभिरेव सततं दीर्घाभिरास्तीयत ॥
एकस्सम्प्रति नाशितप्रियतमः तामेव रामः कथं
पापः पञ्चवटीं विलोकयतु वा गच्छत्वसम्भाव्य वा ॥" (अं २-२)

इति वितर्कयति। "नाशितप्रियतमः" इत्यनेन सीता मृतिं गतेति निश्चप्रचमजानादिति ज्ञायते ॥ 'नश् आदर्शने' इति धातुपर्यालोचनायामपि अलभ्येव पर्यवस्यति।

३. तृतीयाङ्के वासन्तिः —

"अयि कठोर यशः किल ते प्रियं किमयशो ननु घोरमतः परम्।
किमभवाद्विपिने हरिणीदृशः कथय नाथ कथं बत मन्यते ॥" (अ ३-२७)

इति रामं सोल्लुण्ठनं ब्रवीति। तदुत्तरतया रामो वदति—

"त्रस्तैकहायनकुरङ्गविलोलदृष्टेः
तस्याः परिस्फुरितगर्भभरालसायाः।
ज्योत्स्नामयीव मृदुबालमृणालकल्पा
क्रव्याद्भिरङ्गलतिका नियतं विलुप्ता ॥"

एतदुत्तरविमर्शने खलु रामः सीता मृतेत्यवैदिति स्पष्टं विज्ञायते ॥

४. तत्रैव वासन्तिः धैर्यं धरेति वदति। तदा रामस्योत्तरं—
किमुच्यते धैर्यमिति?

"देव्या शून्यस्य जगतः द्वादशः परिवत्सरः।

प्रणष्टमिव नामापि न च रामो न जीवति ॥" इति ॥

५. "उपायानां भावादविरतविनोदव्यतिकरैः
विमर्दैर्वीराणां जगति जनितोत्यद्भुतरसः ॥
वियोगो मुग्धाक्ष्याः स खलु रिपुघातावधिरभूत्
कथं तूष्णीं सह्यः निरवधिरिदानीं तु विरहः॥" (३.४४)

पूर्वं रावणेन सीतापहारसमये बहवस्समासन्नुपायाः। विनोदा अप्यवर्तन्त। पुनरप्यायास्यति सीतेति समीहा च समास। तदा वियोगोऽपि वा रिपुहननावधिरेवाभूत्। अद्य पुनः वियोगो निरवधिः कथमयं विरहः तूष्णीं सह्यः?

'निरवधिः' वाचकाः, दृष्टिर्निधीयतामत्र। अयं वियोगो निरवधिः, कुतः? सीता मृता, अत्र सङ्गमप्रत्याशाशङ्कातुषोपि न गोचरीभवति खलु॥

६. रामचन्द्रः—"हा कष्टम्—
व्यर्थं यत्र कपीन्द्रसख्यमपि मे, वीर्यं हरीणां वृथा
प्रज्ञा जाम्बवतोऽपि यत्र न गतिः पुत्रस्य वायोरपि।
मार्गं यत्र न विश्वकर्मतनयः कर्तुं नलोऽपि क्षमः
सौमित्रेरपि पत्रिणामविषये तत्र प्रिये क्वासि मे॥"

प्राक् कपीन्द्रसेनासाहाय्येन, वानरपराक्रमबाहुल्येन, जाम्बुवतो मन्त्रणाकौशलेन, हनुमतो जलधिलङ्घनाद्यद्भुतकर्मणा, नलस्य सेतुबन्धनादिसौष्ठवेन. सौमित्रिकर्तृकेन्द्राजिदादिवधेन च भवती समुद्धृता। सम्प्रति तु तेषामप्यगोचरस्थाने निलीना। प्रिये! तस्मादहं त्वत्पुनरुद्धरणे निराशस्संवृत्तः॥

अनेन शोकसंविधानेन भवभूतिरामस्य सीतामृतौ नास्ति सन्देहलवः, तत्प्रत्याशापि नास्तीति स्फुटमवगम्यते॥

## - जयति श्रीकृष्णभूपतिः -

### श्रीमत्प्रमाथिनामशुभवत्सरसमागममहोत्सवोपहृत-राजाशीर्वचन पद्यावलिः

---

कृष्णेन्दो ! यदुनाथवंशकलशीवाराशिराकाविधो !
दीर्घायुर्विजयीभवाऽतिविभवैरात्मानुजाद्यैस्समम्
अब्दोयं जगतां भयप्रमथनः त्वां सेवतां [1] वीप्सितैः
[2] पूर्णां रक्ष धरामिमामविरतं धर्मेण मन्वादिवत् ॥ १ ॥

कृष्णो वर्षतु ते शतायुरमितारोग्यं हितान् बान्धवान्
पुत्रान् सप्रतिभानुदारविभवान् रत्नानि मित्राणि च ।
प्रख्यातिं गुरुदैवभक्तिमचलां कृष्णेन्द्र ! सत्सङ्गतिं
भूयात्त्वत्कुशलाय हायनवरोप्येषः [3] प्रमाथी मुहुः ॥ २ ॥

[4] यो राजमण्डलमशेषकलाविशेषै
राप्याययन्नवति तत्कलयन्निजाक्षिणि ।
कृष्णेन्द्र ! ते सकलभोग्यमशेषभाग्यं
देयात्सराजकुलमान्यसुलक्ष्मवाजी ॥ ३ ॥

कृष्णेन्दो ! वसुधामिमां गिरिपुरारण्यापगाम्भोनिधि-
क्षेत्रद्वीपसुवर्णरत्नरजतप्रेष्ठाकराद्यञ्चिताम् ।
शास्त्रज्ञैरतिमात्रशिल्पनिपुणैर्नानाकलापारगैः
[5] तीर्थैष्षद्त्रिभिरुच्छ्रितामविरतं रक्षन् चिरायुर्भव ! ॥ ४ ॥

कृष्णेन्दो ! भवदन्वये यदुपतौ जाते महेन्द्राऽऽभे
पार्थोह्यर्जुन एक एव समभूत्त्वन्यस्त्वगुः कृष्णताम् ।
सत्योदञ्चनहेतवे त्वयिपुनर्जाते यशोभास्करे
[6] नैवाकृष्णमनर्जुनं च भुवने पश्येम कश्चित्क्वचित् ॥ ५ ॥

## (हारबन्धः)

[7] आशाधीशात्तशार्ङ्गीद्यमरमय ! महावीर ! भूरम्यरत्न-
श्रीमद्धामक्षमक्ष्माधवभव ! नवभूपाल ! शीलस्थल ! त्वम्।
स्वीकृत्याकृष्य कृष्णाक्षितिपतिमतिमन् ! हीरहारप्ररम्यं
[8] व्याहाराहार्यहारं वरमुरसिरमादेतमातन्वतर्कम् ॥ ६ ॥

| (पूर्वार्धः) | | | (उत्तरार्धः) | | |
|---|---|---|---|---|---|
| | आ | | | स्वी | |
| त्त | शा | धी | ष्य | कृ | त्या |
| | र्ङ्गी | | | ष्णा | |
| | द्य | | | क्षि | |
| य | म | र | म | ति | प |
| | हा | | | मन् | |
| | वी | | | ही | |
| म्य | र | भू | प्र | र | हा |
| | त्न | | | म्यं | |
| | श्री | | | व्या | |
| क्ष | म | द्धा | र्य | हा | रा |
| | क्ष्मा | | | रं | |
| | ध | | | व | |
| न | व | भ | सि | र | मु |
| | भू | | | या | |
| | पा | | | दे | |
| स्थ | ल | शी | न्व | त | मा |
| | त्वम् | | | र्कम् | |

## (हारबन्धः)

श्रीकृन्नः [9] कृष्णकृत्स्नक्षितिपतिरतिवाग्वैभवो भद्रभर्मा
कारस्मेरस्वल्लासनकनदनघात्मीयकायस्सुयन्ता ।
आयुर्धीयुक्तियुक्तोदितसुतशतकश्रीमुखैर्मुग्धमुग्धै
रेतामाताक्ष्र्यतारं भुवमवतु [10] वराहेशदक्शर्मशक्त्या ॥ ७ ॥

| (पूर्वार्धः) | | | (उत्तरार्धः) | | |
|---|---|---|---|---|---|
| | श्री | | | आ | |
| ष्ण | कृ | न्नः | क्ति | यु | र्धी |
| | त्स्न | | | क्तो | |
| | | | | | |
| | क्षि | | | दि | |
| र | ति | प | श | त | सु |
| | वा | | | क | |
| | | | | | |
| | ग्वै | | | श्री | |
| द्र | भ | वो | ग्ध | मु | खैः |
| | र्मा | | | ग्धै | |
| | | | | | |
| | का | | | रे | |
| स्व | र | स्मे | क्ष्र्य | ता | मा |
| | ल्ला | | | रं | |
| | | | | | |
| | स | | | भु | |
| द | न | क | तु | व | म |
| | घा | | | ग | |
| | | | | | |
| | त्मी | | | हे | |
| स्सु | य | का | र्म | श | दक् |
| | न्ता | | | क्त्या | |

## (हारबन्धः)

11 आकृष्याकृष्य कृष्णक्षितिपतिमतिगाद् भूकरं कर्मकल्यः
लेशंलेशं कृशं नः सकलकविकलागेयशं यः स्वयत्नैः।
प्राकार्षीत्कान्तकामं तमहमसभूपालमालक्ष्यलक्ष्म्याः
लीलामालाकलापं वरमुरसिरयाद्धारये त्वरम्यम् ॥ ८॥

| (पूर्वार्धः) | | | | (उत्तरार्धः) | | |
|---|---|---|---|---|---|---|
| | आ | | | | प्रा | |
| ष्य | कृ | ष्या | | न्त | का | र्षीत् |
| | ष्ण | | | | मं | |
| | क्षि | | | | त | |
| म | ति | प | | स | म | ह |
| | राद् | | | | भू | |
| | भू | | | | पा | |
| र्म | क | रं | | क्ष्य | ल | मा |
| | ल्यः | | | | क्ष्म्याः | |
| | ले | | | | ली | |
| कृ | शं | ले | | क | ला | मा |
| | नः | | | | पं | |
| | स | | | | व | |
| वि | क | ल | | सि | र | मु |
| | ला | | | | या | |
| | गे | | | | द्धा | |
| स्व | य | शं | | त्व | र | ये |
| | त्नैः | | | | म्यम् | |

## (हारबन्धः)

लीलामालाकलापं सुमतिमतिमतं हीरहारप्ररम्यम्
श्रीशाद्यः शान्तिशाली कविभुविसविता देशिकश्शिष्टशिष्यः
धीशादेशानुशास्ता [12] नयभयशयगः नीतिसूतिः श्रुतिज्ञः
श्रीकृच्छ्रीकृष्णकृत्स्नक्षितिपतिमतिमत्कन्धरेऽधत्त धन्ये ॥ ९ ॥

| (पूर्वार्धः) | | | | (उत्तरार्धः) | | |
|---|---|---|---|---|---|---|
| | ली | | | | धी | |
| क | ला | मा | | नु | शा | दे |
| | पं | | | | स्ता | |
| | सु | | | | न | |
| ति | म | ति | | श | य | भ |
| | तं | | | | गः | |
| | ही | | | | नी | |
| प्र | र | हा | | श्रु | ति | सू |
| | म्यं | | | | ज्ञः | |
| | श्री | | | | श्री | |
| न्ति | शा | द्यः | | ष्ण | कृ | च्छ्री |
| | ली | | | | त्स्न | |
| | क | | | | क्षि | |
| स | वि | भु | | म | ति | प |
| | ता | | | | म | |
| | दे | | | | त्कं | |
| ष्ट | शि | कः | | त्त | ध | रे |
| | ष्यः | | | | न्ये | |

गङ्गापापं शमयति शशी हन्ति तापं सुराणां
धेनुर्दैन्यं हरति जगतां स्नानसेवार्थनाभिः ।
राजर्षे ! त्वं सहजसुगुणैस्तुर्यकृष्णाक्षितीन्दो !
तत्सर्वाणि क्षिपसि सहसा दर्शनाद्दृष्टिभाजाम् ॥ १० ॥

हर्षोन्नतिं सुकृतवृद्धिमघापनुत्तिं
सत्कर्मरक्तिमखिलेश्वरपादभक्तिम् ।
इष्टार्थलब्धिमचिरं तवकृष्णभूप !
सूते न कस्य ? तव दर्शनकामदोग्ध्री ॥ ११ ॥

शासत्युर्वीं त्वयि किल कलौ दिक्षु टङ्कृत्य मौर्वी-
भीतिः कोशेष्वपि तु न भुवि क्वापि कृष्णक्षितीन्दो !
औष्ण्यं भोज्ये न हृदि वचने विग्रहे वा प्रजानां
तापा [13] दीक्षाविधिषु भुजयोः न प्रजासु त्रितापाः ॥ १२ ॥

[14] कर्णाटं हि वयं श्रुतेः प्रतिपदं भूकान्त ! जानीमहे
जातो य श्श्रुतिगम्यशब्दविपयव्युत्पत्तिगर्भो यतः ।
तत्कर्णाटनृपोऽभवच्छ्रुतिनृपः कृष्णेन्द्र ! चक्षुष्मतां
तत्त्वं वैदिकधर्मरक्षणकलाप्रोदञ्चकाग्रेसरः ॥ १३ ॥

सर्वज्ञोत्तमगात्रगस्सहि कलानाथोऽस्ति नाऽसर्ववित्
कृष्णेन्दो ! सकलानिधिर्यदुकुलोपादानहेतुः स्मृतः ।
तद्वंश्येषु नृपेषु कारणगुणैः पूर्णेषु सर्वज्ञता
सिद्धा चेत् क नु ? सर्ववित्त्वमुपयात्त्वन्यं भवन्तं विना ॥ १४ ॥

[15]राजन् ! पूर्णफलं प्रगृह्य नृपतेस्संदर्शनं यच्छ्रुतं
तद्व्याख्या बुधकल्पके त्वयि परं द्वेधा समुन्मीलति ।
पूर्वं पूर्णफलं प्रगृह्य भवतो जाताः कृतार्था वयं
पश्चात्पूर्णफलाक्षतान्वितकराः यत्त्वां मुदाऽऽशास्महे ॥१५॥

कार्यौ संहतिविग्रहौ सुसमये क्लृप्ते पदे धीमता
तौ स्वच्छन्दनियोजितौ यदि तदा भङ्गो भवेच्छन्दसाम् ।
नीतिज्ञस्य कवेरिदं हि वचनं विज्ञातमेवास्ति ते
त्वच्छन्दांस्यविकुण्ठितानि विलसन्त्याशासु यन्नृपते ! ॥ १६ ॥

कृष्णेन्द्रपूर्णचन्द्रे
लसति शशामाऽऽशु तिग्मकरतापः ।
शिशिरैः करैः कुवलय-
स्फातिर्यस्यान्वयैकसहजगुणः ॥ १७ ॥

प्रमाथ्यब्द एषः प्रमोदान् प्रवर्षन्
प्रकर्षेण वो नः प्रभूणां प्रजानाम् ।
प्रमादान् प्रमथ्नन् प्रयच्छन् प्रिय-
श्रीः प्रदद्यात्प्रकृष्टायुरारोग्यभाग्यं ॥१८॥

आयुर्दीयमनामयश्रियमिळासौभाग्यमैश्वर्यधी-
सत्सन्तानचयं सुहृद्दळबलं सद्बान्धवप्रोन्नतिम् ।
आर्याचार्यशुभाक्षताक्षतधनं ते वर्षतादन्वहं
कृष्णेन्दो ! यदुवंशसुंदरनिधिस्सम्पत्कुमाराकृतिः ॥ १९ ॥

श्रीमत्कृष्णनृपालमन्दिरवरालङ्कारवाग्देवता-
भाण्डागारसुधीप्रकाण्डपदभाक् श्रीशैलवंशोद्भवः ।
सत्यागारपरंपरान्विततनुः श्रीवाससद्देशिका-
चार्यः कृष्णनृपाल ! ते द्रुतमिमाः प्रायुङ्क्त पद्याशिषः ॥ २० ॥

इति सानन्दमाशास्ते ॥

तिरुमले, सत्यागालं, श्रीनिवासदेशिकाचार्यः.

## टिप्पणी.

---

[1] एवंविधप्रमाथ्यब्दशुभसमागममहोत्सवपरंपरासमागमः प्रभोरस्त्वित्यभि-प्रायः ॥

[2] अखण्डभूमण्डलाधिपत्यमास्त्वित्यर्थः ॥

[3] पौनः पुन्येन प्रमाथ्यब्दानां शुभसमागमस्ते भूयात् इत्यर्थः ॥

[4] पद्यमिदं हयग्रीवपक्षे उत्तमाश्वपक्षे च अन्वेति । तथाहि—यः, राजकुलमान्य-सुलक्षवाजी-चन्द्रमण्डलमध्यध्येयजगज्जन्मादिलक्षणलक्षितकारणाश्वः. नृपसदनमान्य-

अश्वशास्त्रोक्तसल्लक्षणाढ्य उत्तमाश्वश्च, राजमण्डलं-चन्द्रमण्डलं नृपचक्रं च, अशेष कलाविशेषैः-चान्द्रषोडशकलाप्रभेदैः सकलविद्याविशेषैरश्वगतिकलाभेदैश्च, आप्याययन्-प्रीणयन्, तत्-चन्द्रमण्डलं, नृपचक्रं च, निजाक्षिण कलयन्-स्ववामनयने स्थापयन्, नेत्राभ्यां पश्यंश्च, (हयग्रीवस्य चन्द्रमण्डलान्तर्वर्तित्वं तल्लोचनत्वं च नानातन्त्रेषु बहुधा प्रोद्धुष्टं) अवति-चतुर्विधपुरुषार्थदानेन धनधान्याद्यभिमतैश्वर्यवर्दनेन च रक्षति, स हयवदनः, उत्तमाश्वश्च, सकलभोग्यं-सर्वस्माद्भाग्यं, अशेषभाग्यं-सकलविधैश्वर्यं, अस्य शेषः विष्णुद्भक्तः तेन अनुभाव्यभाग्यं इति वा, अन्यैरधरैनुपभुक्तमपर्युषितमैश्वर्यमिति वा हयग्रीवपक्षेर्थः, अश्वपक्षे तु सकलविधैश्वर्यमित्यर्थः, देयात्-प्रापयेत्. राजमण्डलान्तर्वर्तिनः— तन्मण्डलं स्वनेत्रान्तरवस्थाप्य रक्षितुः हयग्रीवभगवतः, तथाविध अश्वविशेषस्य च राज्ञां सकलभाग्यसंवर्धने सर्वतोमुखमौचित्यमस्त्येवेति कवेः परमाकूतम् ॥

5 राजनीत्युक्त अष्टादशसत्यशोधकतीर्थैः ॥

6 प्रभोर्यशसा विश्वमवदातमासीत्, तत्स्मृतिकीर्तनाभ्यां तु विश्वं कृष्णमयमेवाऽभूदित्यभिप्रायः ॥

7 आशाधीशाश्च आत्तशार्ङ्गाद्यमराश्चेति विग्रहः । आत्तदशार्ङ्गायेनेति विग्रहे विष्णुरित्यर्थः । "अष्टाभिर्लोकपालानां मात्राभिर्निर्मितो नृपः" "नाविष्णुः पृथिवीपतिः" "सर्वदेवमयो राजा" इत्यादिस्मृतयोऽत्रानुसन्धेयाः.

8 व्याहाररूपं चोराद्यहार्यहारमित्यनेन एतद्ग्रन्थहारस्य रत्नादिहारापेक्षया उत्कर्षातिशयस्सूचितः ॥

9 कृष्णाख्यसकलभूमण्डलेश्वरः ॥

10 आदिवराहस्य भूसमुद्धारकत्वात्तत्कटाक्षाभ्यर्थना ॥

11 धर्मेण षड्भागमात्रलघुकरं गृह्णन् प्रजानां महोपकारं प्राकार्षीदित्यभिप्रायः

12 नष्टभयपरतन्त्रः ॥

13 वैष्णवदीक्षायां तापाख्यसंस्कारे तप्तमुद्राधारणकालिकवैधतापमात्रं जगत्यभूदित्यभिप्रायः ॥

14 कर्णे अटतीति कर्णाटः, श्रूयत इति श्रुतिः, इति व्युत्पत्तिदृष्ट्या कर्णटशब्दश्रुतिशब्दयोः पर्यायत्वम् ॥

15 "रिक्तहस्तेन नोपेयादिति स्मृत्यर्थं चमत्करोत्यस्मिन् पद्ये कविः ॥

॥ श्रीः ॥

# नव्यप्रमाथि वत्सरारम्भ मङ्गलाशंसनम्

---

विधत्तां वस्सौख्यं मतिमतिशुभां निश्चलमुदं
विकम्पां सम्पत्तिं प्रकृतिनृपतिप्रीतिमतुलाम् ।
अदभ्रायुश्च श्रीहयवदनदेवोऽत्रपरमः
प्रमाथ्यब्दे नव्ये निगममयहेषोऽनघतमः ॥ १ ॥

प्रमाथिशरदो नृपश्शशिसुतोऽर्घसेनाम्बुदा-
धिपश्च सचिवो गुरुर्धरणिजो रसाधीश्वरः ।
शनिस्तदनु धान्यपोऽवतु वरविश्च कृष्णप्रभुं
ससूनुसहजं सदा विरसपश्च सस्याधिपः ॥ २ ॥

नव्यप्रमाथिशरदारम्भदिने भूतये सभक्तिभरम् ।
परिपठतेमां दैवतसंप्रार्थनपद्यमालिकां लोकाः ॥ ३ ॥

सर्वाम्नायविलोडनोद्भवशुभाशेषप्रणुत्यानघ-
ज्ञानक्षीरपयोधिफेनशकलव्यामोहदानुद्वमन् ।
स्निग्धस्वादुसुगन्धिसृक्विविगलज्लालाकणान् भासतां
वामोत्सङ्गगसिन्धुजाभुजलताश्लिष्टः पुराणो हयः ॥ ४ ॥

कालिन्दीतीरकुन्दद्रुमतलधरणौ वामपादे निकुञ्च्य
न्यस्यन् दक्षं च पादं व्रजयुवतिगवामन्तरे वर्तमानः ।
वेणुं पाणिद्वयेन क्वणनसुरुचिरं सप्रमोदं वितन्वन्
नादैर्मम्मं च मोहे भुवनतलमसौ वासुदेवस्सदाव्यात् ॥ ५ ॥

शेषाचलभूषामणियोषामणिरेषा
भाषानुतदोषातिगभाषा शुभवेषा ।

दोषाकरभूषादिमभूषागणघोषाऽ-
शेषावनतोषावतु दोषाहितमोषा ॥ ६ ॥

नीराधिकधाराधरराजिच्छविवारा
स्माराशुगधारातुररामावनशूरा ।
सीरायुधपारातिगसारादरभाराऽऽ-
भीराभयधारावतु धीरा धुतमारा ॥ ७ ॥

खलानां स्तेनानां जनपदविनाशोत्सुकधिया-
मधर्मोत्कानां च प्रकृतिनृपविश्लेषणकृताम् ।
विघातानां वृष्टेः प्रसृमरगदानां प्रमथनात्
प्रमाथ्यब्दाह्वासावधिधराणि सार्था ध्रुवमभूत् ॥ ८ ॥

लोके प्राक् चैत्रशुक्लप्रतिपदि तरणेरुद्गमाद्यौगपद्या-
ल्लङ्कायां यद्बभूवुर्युगदिनतिथिपक्षाब्दसङ्क्रान्तिमासाः ।
कल्पो मानानि मेषायनमनुसुरभिप्राणनाड्यस्तदस्यां
पञ्चाङ्गाकर्णदेवार्चनमुखशुभकार्याणि कुर्वन्ति सर्वे ॥ ९ ॥

श्रीकृष्णावनिपेशितुस्तदनुजश्रीमन्नृसिंहप्रभो-
स्तत्सूनोर्जयचामराजनृपतेरप्यूर्जितां सम्पदम् ।
आरोग्यं पुरुषायुषं च तनुतामानन्दमन्यादृशं
पद्माक्षिभ्रुवदास एष करुणासिन्धुस्त्रिलोकीपतिः ॥ १० ॥

एवं मुदा नवीनप्रमाथिवत्सरशुभं सदाशास्ते ।
कविमौलिः कृष्णनृपास्थानमहापण्डितस्सुधीश्शेषः ॥ ११ ॥

महाविद्वान्,
करूरु शेषाचार्यः.

["तायिनाडु" सम्पादकानां कृपातः]

# पारितोषिकमहासभाध्यक्षाणामागमनम्



वामतः—१. एस्. वि. कृष्णमूर्ति, एं.ए. महोदयाः (शालाध्यक्षाः)

२. युवराजकुमार श्रीजयचामराजेन्द्र ओडेयर् बहद्धूर्वर्याः बि.ए. (पारितोषिकसभाध्यक्षाः)

३. पण्डितरत्नं धर्माधिकारिणः ब्र॥ श्री॥ काशी शेषवेङ्कटाचलशास्त्रिणः (शालाकार्यनिर्वाहकसमितिसदस्याः)

४. धर्माधिकारिणः ब्र॥ श्री॥ तिरुवळ्ळूरु श्रीनिवासराघवाचार्याः (शालाकार्यनिर्वाहकसमितिसदस्याः)

५. एम्. रामराव्, बि.ए., बि.एल्. महोदयाः (शालाकार्यनिर्वाहकसमित्यध्यक्षाः)

# उ द न्त स न्दो हः

---

## मैसूरु श्रीमन्महाराजसंस्कृतमहापाठशाला वार्षिकमहोत्सवः

ऐषमोऽद्दसीयमहापाठशालीयवार्षिकमहोत्सवः माघमासे सितसप्तम्यां श्रीमन्महीशूरनरपालपट्टाभिषेकस्मारकानेहसि शुभंयुतमे श्रीमद्युवराजकुमारश्रीजयचामराजओडेयर् महोदयाध्यक्षतायां महासमारम्भेण निरवर्ति। तदा खलु चम्पकादितरुनिकरसुमपरिमलवाहिनि महापाठशालाक्रीडाङ्गण एवातिदूरोन्नतं पवनरयपरिकम्प्यमानगण्डभेरुण्डाङ्कितध्वजपटं कनककपिशक्षौमशोभितं अतिमृदुलस्पर्शया वर्णकुथया समास्तीर्णक्षोणीभागं तदुपरि नानारूपदारुविशेषनिर्मितमहार्हासन्दीसन्दोहसमलङ्कृतं विविधविद्युद्दीपसङ्घसंशोभितं पटभवनमेकं निरमायि। तत्र च मध्यभागे समुन्नतवेदितले समधिकशोभावाहि अतिश्लक्ष्ण महार्घचीनांशुकसमाच्छन्नसन्निवेशं मसृणमहार्हमासनमेकं सन्न्यवेशि। ततः समुपसन्नसमये नृपसभोचितवसनोष्णीषाप्रपदीनकवचाच्छन्नकलेबराः अधिकारिणः, राजानुबन्धिनः, प्रणिधयः, पत्रिकाप्रतिनिधयः, कनकरेखाङ्कितोर्णमयोष्णीषालङ्कृतोत्तमाङ्गाः परिधृतोर्णवसनाः पण्डिताः पुरोधसश्च सभास्ताराः सभातलमागत्य यथार्हमासनान्यलमकुर्वन्। तदनु निर्दिष्टसमये बाष्पशकटादवातरत्परिमितपरिवारपरीतः राजकुमारमहोदयः महापाठशालायाः महाद्वारि। तत्र तदागमनं प्रतिपालयद्भिः ससम्भ्रमोत्थितैरुत्तिष्ठद्भिर्नतैनमद्भिः प्रविष्टैः सभां प्रविशद्भिश्च शालीयाधिकारिभिः सभाजितः मङ्गलवादित्रघोषे समुज्जृम्भमाणे सुरपतिरिव मरुद्भिरनुगम्यमानोऽनुजीविजनैः कार्तस्वररेखाराञ्जितोष्णीषमौलिः अमलधवलकवचाच्छन्नतनुः 'इत इत' इति पुरःप्रधावद्भिः प्रतिहारिभिः निवेद्यमानसरणिः अधिसरणि जनैः समर्पितानि प्रणामसहस्राण्यङ्गीकुर्वाणः मन्दं-

मन्दं मसृणकुथासु पदं निदधानः क्रमेण सभातलं प्राविशत्। तत्क्षणमेव सभास्तारा गम्भीरमधुरां मूर्तिं दर्शंदर्शमेवानन्दतुन्दिलाः ससम्भ्रममुत्थाय विनयावनतमौलयः सममेव राजभक्तिप्रदर्शनपूर्वकं प्राण- सिषुः । तदनु नृपसूनुः प्रतिप्रणामं विधाय, पारदृश्वनो निगमागमानां वैदिकविबुधानवलोक्यैव विनयप्रह्वो दर्शितभक्तिर्दूरत एव अनमत्। तत 'स्वस्ति यदुकुलान्वयाय भवते' इति सममेवाशीर्व्याहारानुदगिरन्पण्डि तोत्तंसाः । अथ पाठशालाकार्यनिर्वाहकसमित्यध्यक्षेणोपदर्शितसरणि समन्दहासः मध्यभागावस्थापितामध्यक्षवेदिकामध्यासांचक्रे । ततश्च प्रथ तोत्थितेषु यथास्वमलंकुर्वाणेष्वासनानि राजगौरवान्मुदितवदनेषु नृप तनयाननिबद्धलक्ष्येषु सभ्येषु, भूपतितनयोऽपि भावावेदननिपुणया दृशै तान् यथार्हं सम्भावयाभास । तदानीं च मङ्गलस्वागतपद्यपाठानन्त कलाशालाध्यक्षः एस्. बि. कृष्णमूर्तिमहोदयः ससम्भ्रममुपसृत्य विनया वनतकन्धरः प्रणिपत्य शालीयावेदनपत्रिकामपठत् ॥

अथ पृथिवीपतितनयः समुत्तीर्णविद्यार्थिसार्थाय समुचितपारितो षिकवितरणमकरोत् । तदनु महास्थानधर्माधिकारी तिरुवल्लूर श्रीनि वासराघवाचार्यमहोदयः समितिप्रातिनिध्येन साशीर्वचनं सुमनोहरसुम मालिकया राजकुमारग्रीवामलमकार्षीत् । ततः सभाध्यक्षमहोदयः समु त्थाय भद्रासनाद्गम्भीरमधुरेण रवेण विमलदशनप्रभानुरञ्जितया गीतिक लयेव गिरा गीर्वाणवाणीगरिमाणमभाणीत्। ततस्तादृशेन समुचितवचनेन समुपनतविस्रम्भाः सभास्तारास्तर्पिताः प्रोत्साहिताश्च समभवन् । तदा च श्रीयुत तिरुवल्लूरमहोदयः अभिनन्दनवाणीमभाषत । तदनन्त श्रीकृष्णराजसार्वभौमस्य जयजयनिनादेन दिङ्मुखं मुखरितमासीत्, ततश्च विसृष्टा सभा ॥

का. प्राणेशाचार्यः

# विषयसूचना

---



---

# सम्पादकीयसमितिः

१. श्रीमन्तः अर्थशास्त्रविशारदाः विद्यालङ्काराः महामहोपाध्यायाः डाक्टर् आर्. शामशास्त्रिणः, बि.ए., पिएच्.डि., एं.आर्. ए.एस्., विश्रान्त मैसूरु प्राच्यकोशागाराध्यक्षाः शासन-विमर्शशाखाध्यक्षाश्च

२. श्रीमन्तः प्रोफेसर् सि. आर्. नरसिंहशास्त्रिणः एं.ए., मैसूरु महाराजाकालेज् संस्कृत प्रधानोपाध्यायाः

३. पण्डितरत्नं धर्माधिकारिणः ब्र. श्री. काशी शेषवेङ्कटाचल-शास्त्रिणः

४. साहित्यरत्नं महाविद्वांसः ब्र. श्री. क. गोपालकृष्णशास्त्रिणः महाराजाकालेज् संस्कृतपण्डिताः

५. महाविद्वांसः ब्र. श्री. करूरु शेषाचार्याः, महापाठशाला ज्यौतिषप्रधानोपाध्यायाः

६. विद्वांसः ब्र. श्री. एस्. वेङ्कटाचार्याः, महापाठशाला साहित्य-प्रधानोपाध्यायाः

७. श्रीमन्तः एस्. वि. कृष्णमूर्तयः, एं.ए., महापाठशालाध्यक्षाः (सम्पादकाश्च)

॥ श्रीः ॥



# श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका

प्रतिमासत्रयं प्रकटीक्रियमाणा

" कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳ समाः "

(ईशोपनिषत्)

सम्पुटम् १५] 1939–June : प्रमाथी–ग्रैष्मी [सञ्चिका २

## सुभाषितानि

अकलितशब्दालङ्कृतिरनुकूला स्खलितपदनिवेशापि ।
अभिसारिकेव कथयति सूक्तिरसोत्कर्षशृङ्गारा ॥ १ ॥

आस्वादितदयिताधरसुधारसस्यैव सूक्तयो मधुराः ।
अकलितरसालमुकुलो न कोकिलः कलमुदञ्चयति ॥ २ ॥

कान् पृच्छामः सुरास्स्वर्गे निवसामो वयं भुवि ।
किं वा काव्यरसस्स्वादुः किं वा स्वादीयसी सुधा ॥ ३ ॥

सरसा सालङ्कारा सुपदन्यासा सुवर्णमयमूर्तिः ।
आर्या तथैव भार्या न लभ्यते पुण्यहीनेन ॥ ५ ॥

अर्थान् के चिदुपासते कृपणवत्के चित्त्वलङ्कुर्वते
वेश्यावत्खलु धातुवादिन इवोद्बध्नन्ति के चिद्रसान् ।
अर्थालङ्कृतिसद्रसद्रवमुचां वाचां प्रशस्तिस्पृशां
कर्तारः कवयो भवन्ति कति चित्पुण्यैरगण्यैः ॥ ५ ॥

नाहूतापि पुरः पदं रचयति प्राप्तोपकण्ठं हठात्
पृष्टा न प्रतिवक्ति कम्पमयते स्तम्भं समालम्बते ।
वैवर्ण्यं स्वरभङ्गमञ्चति बलान्मन्दाक्षमन्दानना
कष्टं भोः प्रतिभावतोऽप्यभिसभं वाणी नवोढायते ॥ ६ ॥

तत्तावदेव शशिनस्स्फुरितं महीयो
यावन्न तिग्मरुचिमण्डलमभ्युदेति ।
अभ्युत्थिते सकलधामनिधौ तु तस्मिन्
इन्दोस्सिताभ्रशकलस्य च को विशेषः ॥ ७ ॥

पततु नभसो गच्छत्वस्तं निमज्जतु वारिधौ
व्रजतु वरुणागारद्वारं प्रभाभिरनावृतः ।
तदपि तरणिर्दत्वा पादं शिरस्सु महीभृतां
दलिततिमिरव्रातः प्रातः पुनस्सकृदेष्यति ॥ ८ ॥

हे हेमकार परदुःखविचारमूढ
किं मां मुहुः क्षिपसि वारशतानि वह्नौ ।
सन्दीप्यते मयि सुवर्णगुणातिरेको
लाभः परं तव मुखे खलु भस्मपातः ॥ ९ ॥

गतसारेऽत्र संसारे सुखभ्रान्तिश्शरीरिणाम् ।
लालापानमिवाङ्गुष्ठे बालानां स्तन्यविभ्रमः ॥ १० ॥

प्रादुर्भवन्ति वपुषः कति नाम कीटाः
यान्यत्नतः खलु तनोरपसारयन्ति ।
मोहः क एष जगतो यदपत्यसंज्ञां
तेषां विधाय परिशोषयति स्वदेहम् ॥ ११ ॥

एकसार्थप्रयातानां सर्वेषां तत्र गामिनाम् ।
यद्येकस्त्वरितं यातस्तत्र का परिदेवना ॥ १२ ॥

सि. आर्. नरसिंहशास्त्री,
संग्रहीता.

## हंस—मानिनीसंवादः

सद्योवधूरप्यतिरूपमत्ता
प्रत्यग्रतारुण्यविलासदृप्ता ।
भृशानुरक्तान् विवरीतुकामान्
निराकरोद्भूरिगुणाभिरामान् ॥ १ ॥

विलोकयन्ती मुकुरे सदैव
लोलाक्षिवक्राधरदन्तपङ्क्तीः ।
मृदुस्मितोदारविलासभावान्
निजानसावुन्मदयांबभूव ॥ २ ॥

पुष्पेषुवश्ये वयसि स्थितापि
रूपग्रहोन्मादगृहीतचित्ता ।
जहौ न निर्वन्धमियं प्रमत्ता
मनोभवार्तिं छलतो विषेहे ॥ ३ ॥

समुत्क्षिपन्ती चरणेन हेम-
रेखाङ्कचेलाञ्चलमानताङ्गी ।
नीहारबिन्दूज्वलशाड्वलेषु
चचार दर्पाद्गलितोत्तरीया ॥ ४ ॥

अनङ्गसन्नद्धनिषङ्गकल्पान्
प्रसूनगुच्छान् व्यतिषक्तभृङ्गान् ।
विलोक्य च द्वन्द्वचरान् विहङ्गान्
चुक्षोभ किञ्चिद्धृदयं कृशाङ्ग्याः ॥ ५ ॥

जग्राह कश्चित्सुखसुप्तहंस-
मुत्कण्ठया सोऽपि जगाद रोषात् ।

हंसः—

का त्वं किमर्थं कृपणे रुणत्सि
जहीहि मां स्वैरचरं वनान्ते ॥ ६ ॥

उपस्थितान् पूर्वमपास्य यूनः
समुत्सुकान् दुर्ललिता मदेन ।
कालोपपन्नं परिहृत्य पश्चा-
त्सुदुःखमास्ते खलु दुःशरारिः ॥ ७ ॥

विहाय गर्वं समवाप्य कान्तं
जुषस्व भोगानधुनैव भाग्यान् ।
उन्मादिनी यद्भ्रमतस्त्वमित्थं
काले व्यतीते न शुनापि काम्या ॥ ८ ॥

मानिनी—

इत्थं प्रविश्याभिहितेव तेन
बभाण लज्जापिहिताक्षराणि ।
जानासि सर्वं शकुने कदा नु
प्रब्रूहि मां कः परिणेष्यतीति ॥ ९ ॥

हंसः—

रूपातिभारां मदरागगुर्वी-
मारोप्य वी.थ्यां चतुरन्तयानम् ।
यदा जनौघः परिणेष्यति त्वां
तदा सुखेनोपयमं लभेथाः ॥ १० ॥

विभूषिता बन्धुजनैः परीता
कार्तस्वरोद्दीपितगात्रयष्टिः ।
लब्धास्यभिप्रेतपदाधिवासं
स्वजीवितेशं लभसे तदानीम् ॥ ११ ॥

मानिनी—

किमवमश्लीलवचो ब्रवीषि
मयापराद्धं किमु ते शकुन्त ।
स्फुटप्रतीतार्थविरुद्धमर्थं
जानाम्यहं श्लेषकवेर्हृदिस्थम् ॥ १२ ॥

नैवापलेपान्न च रूपगर्वा-
न्नैवाभिजात्यादिमदातिरेकात् ।

तिरस्कृतास्ते परिणेतुकामाः
दौरात्म्यमेषां हृदयं भिनत्ति ॥ १३ ॥

नूनं युवानश्चपलाः कृतघ्ना
भोगाय मुग्धास्तरुणीः प्रतार्य ।
भुक्त्वानुरक्तां जहति प्रकाम-
मापीतसारामिव पानपात्रीम् ॥ १४ ॥

अतिप्रबन्धप्रणयप्रसङ्ग-
प्रतारितोन्मुग्धवधूकदम्बे ।
प्रत्यग्रभोगोत्सुकचित्तवृत्ते
न विश्वसेत्पुंसि मृषानुरक्ते ॥ १५ ॥

विमाननावास्तु नियन्त्रणा वा
निशारणं वा भवतु प्रकाशम् ।
न चेन्मृषा दोषकथा जनानां
तद्भागधेयं परमं वधूनाम् ॥ १६ ॥

इहैव कश्चित्तरुणोऽक्षधूर्तः
दुर्दैवनेन क्षपिताखिलश्रीः ।
पितुः प्रसिद्ध्या परिणीय कांश्चि-
त्कन्यामसामान्यगुणानुरागात् ॥ १७ ॥

नवोढया वल्लभयातिभक्त्या
शुश्रूषमाणः श्वशुरोपजीवी ।
लब्ध्वा वधूबन्धुजनप्रदत्तं
सुदायहारं च समग्रवित्तम् ॥ १८ ॥

प्रयातुकामः स्वगृहान् दुरीहः
वधूद्वितीयः सहसा प्रतस्थे ।
अग्रेवणं कापथमाश्रितस्स-
न्ननुव्रतानां दयितां जिहीर्षुः ॥ १९ ॥

संगृह्य वस्त्राभरणानि चोर-
निपातशङ्कीव जगाम दूरम् ।

सहागतां शीलवतीं सुरूपां
तामेकपत्नीमविदुष्टचेताः ॥ २० ॥

अगाधगर्ते विनिपात्य वेगा-
त्सप्राद्रवद् दुर्व्यसनाभिषङ्गात् ।
द्रुमस्य शाखामवलम्ब्य साध्वी
निजेन शीलेन ररक्ष देहम् ॥ २१ ॥

इत्थं नृशंसेन कदर्थितापि
नाचिन्तयद्भर्तुरवर्णमार्या ।
सा स्त्री त्वमेव स्थिरशोकदायि
मुहुर्मुहुर्निष्प्रसहं निनिन्द ॥ २२ ॥

दुर्वारदुष्टव्यसनाभियोगा-
न्नैवानृशंस्यं न च संस्तवो वा ।
हा कष्टमामूलविनाशहेतुः
पुंसां प्रसङ्गः खलु मानिनीनाम् ॥ २३ ॥

दौरात्म्यमेषां हृदये विभाव्य
न कामये ये पुरुषानुवृत्तिम् ।
तत्स्मर्यमाणं हृदयं भिनत्ति
यथा तिरश्चीननिखातशल्यम् ॥ २४ ॥

हंसः—

कचित्कदाचित्पुरुषेषु दोष-
सम्भावनास्याद्विषयाभिषङ्गात् ।
नैसर्गिकी सा तु विभावरीणा-
मशेषदोषाश्रयवीवरीणाम् ॥ २५ ॥

एनामसाधारणशीलधन्यां
गुणोपपन्नां विनिनीषुराह ।
जहाहि गर्वं विनयेन भद्रे
कुलाङ्गनानां चरितं जुषस्व ॥ २६ ॥

प्रातः प्रफुल्लानि सरोरुहाणि
सायं विशीर्णानि यथा भवन्ति ।
रूपं तथैव क्षणमात्ररम्यं
सर्वेऽपि भावाः क्षणभङ्गुराः स्युः ॥ २७ ॥

पर्याप्तपर्यन्तसमग्ररेख-
मुन्मीलितं तूलिकयेव चित्रम् ।
तद्यौवनारम्भविशेषरम्यं
जरा क्षणध्वंसि करोति रूपम् ॥ २८ ॥

केशे गृहीत्वा विनिपात्य दन्तान्
विनाम्य गात्राणि निखाय दृष्टिम् ।
समत्सरे यं परिणामशक्त्या
रूपं विरूपं कुरुते क्षणार्धे ॥ २९ ॥

उपेक्षितं यद्विनिवृत्ततर्षै-
र्निरीक्षितं कामिजनेन मोहात् ।
अपेक्षितं काकसृगालकीटैः
तद्रक्ष्यते मोहवशेन मूढैः ॥ ३० ॥

विद्युच्छले कायसुखावलीढे
काये सदापायनिकायहेये ।
क्षणार्धविध्वंसिनि रूपगर्वः
कियानयं ते मदभारतान्ते ॥ ३१ ॥

चित्रस्य धूमोद्गतिधूसरस्य
राकाशशाङ्कस्य तमोहतस्य ।
मम्लायमानस्य सरोरुहस्य
जीर्णस्य रूपस्य न वेत्सि साम्यम् ॥ ३२ ॥

बालो युवा वृद्ध इति क्रमेण
कालस्य नित्यभ्रमणाद्विपाकः ।
तस्मिन्नवस्थात्रितये सवेग-
चक्रोपमे रूपमदं जहाहि ॥ ३३ ॥

नियम्य चित्तं नियमेन बाले
शुश्रूषमाणा पतिमादरेण ।
प्रसूय पुत्रान् श्रुतशीलवृत्तान्
पतिव्रतानां भव कीर्तनीया ॥ ३४ ॥

निपीय वाचं मनसा जहास
दर्पादसूयाकुटिलं निरीक्ष्य ।
धिङ्मूढ नारीहृदयं न वेत्सी-
त्याक्षिप्य तं स्वैरचरी निरास्थत् ॥ ३५ ॥

मानिनी—

उद्गाढरागप्रणयप्रकर्ष-
मदेकतानप्रवणाय पुंसे ।
अनन्यकान्ताजनपीतसार-
स्वान्ताय कान्ताय न किं स्पृहा मे ॥ ३६ ॥

हंसः—

असंस्तुतानामनुरागबन्धः
कथं भवेदार्यपथे स्थितानाम् ।
भजस्व धीरं स्वगुणानुवृत्त्या
सेवस्व पश्चात्स्वयमेव वेत्सि ॥ ३७ ॥

मानिनी—

दिनमुखसुखदानां मध्यसन्तापनानां
परिणतिविरसानां शारदानामिवाह्नाम् ।
परिमृदितमृणाळीसूत्रकाभङ्गुराणां
विषयसुखरसानां प्राप्तये को यतेत ॥ ३८ ॥

महाविद्वान् कुक्के सुब्रह्मण्यशास्त्री.

किं च त्रयस्त्रिंशत्संवत्सरचक्रे विंशतिसंवत्सरात्मक एको भागः त्रयोदशसंवत्सरात्मकोऽपरो भाग इति द्वौ भागौ वर्तेते इति पूर्वमेवोक्तम्। आद्ये भागे अष्टौ सप्त वा अधिमासाः सम्भवन्ति। द्वादशसहस्रदिवसाः त्रयस्त्रिंशच्चान्द्रसंवत्सरसम्मिता भवन्ति। एते त्रयस्त्रिंशत्संवत्सराः त्रयस्त्रिंशद्देवतारूपा इति चक्रस्यास्य देवतात्मकत्वं सिध्यति॥

त्रयस्त्रिंशत्संवत्सरचक्रमेकं क्रैस्तैः 'मेसियानिक् सैकल्' इत्यभिधीयते। 'मेसिय' इति क्रिस्तस्य नामधेयम्। अयं च विषयः छेंबर्स्नाम्ना पाश्चात्यविदुषा स्वीये ज्यौतिषसिद्धान्ते (Hand-book of Astronomy) वर्णितो दृश्यते। अस्य चक्रस्य विंशतिसंवत्सरात्मको भागः देवपितृखण्ड इति, उत्तरो भागः आसुरखण्डः, मातृखण्डश्चेत्यभिधीयते। पूर्वो भागः दिवसभागः उत्तरो भागः रात्रिभाग इति च तयोर्नामधेयान्तरं वर्तते॥

'त्वाष्ट्रीं मायां वैश्रवणः। रथं सहस्रबन्धुरम्। पुरुश्चक्रं सहस्राश्वं आस्थायायाहि नो बलम्।' इति तैत्तिरीयारण्यके (I 31) बलिग्रहणार्थं कुबेरमुद्दिश्य कृतया प्रार्थनया द्वितीयभागस्य कुबेरखण्ड इति नामान्तरमप्यासीदिति ज्ञायते। प्रथमभागे दिवसस्य द्राघीयस्त्वं, द्वितीयभागे रात्रेर्द्राघीयस्त्वमितितयोर्दिवसभागः रात्रिभागश्चेति नामकरणे कारणम्। यच्च पितृसापिण्ड्यं सप्तपुरुषावधि, मातृसापिण्ड्यं पञ्चपुरुषावधि, इति धर्मशास्त्रेषु कथ्यते तस्येदमेव मूलमिति प्रतीयते॥

किं च 'सहस्राह्ण्यं विततावस्यपक्षौ हरेर्हंसस्य पततस्स्वर्गम्' इत्यथर्ववेदे ऋग्वेदे च सहस्राहपरिमितग्रहणचक्रं वर्णितं दृश्यते। अत्रैकैकपक्षे एकैकं सहस्रमिति पक्षद्वये सहस्रद्वयमिति षट्सहस्राणि परिगण्यान्ततः एकमेव सहस्रमादाय सप्तसहस्रं पूरणीयं भवति। एतच्च 'साकं जानां सप्तथमाहुरेकजम्' इति मन्त्रेण सूच्यते। एतेनैव न्यायेन 'इयानः कृष्णो दशभिस्सहस्रैः' इति यः कृष्णोपरागः प्रतिविं-

शतिसहस्रदिवसं संभवतीति तैत्तीरीयारण्यके वर्णितम्। तत्रापि प्रतिपक्षं दशसहस्राणि सम्पादनीयानि । विंशतिसहस्रदिवसैः अष्टमासोत्तराः चतुष्पञ्चाशत्संवत्सरा भवन्ति। चतुष्पञ्चाशत्संवत्सरेषु त्रीण्यष्टादशसंवत्सरात्मकानि ग्रहणचक्राणि सम्पद्यन्ते । विस्तरस्तु मदीयात् द्रप्सनामकाद्ग्रन्थादवगन्तव्यः ॥

इदानीं बैबल्-कुरान्-वेदेषु साधारणा ये ग्रहणचक्रविषयाः ये च समानार्थका देवतावाचकाः देवनगरवाचका वा शब्दा दृश्यन्ते तान्प्रदर्शयितुं यत्नःक्रियते। 'इस्रेयलि'ति 'आरबीया' इति च ये प्रसिद्धा जनाः ते पूर्वं सूर्याचन्द्रमसोरुपासका अभवन्निति 'कैंब्रिड्ज एन्शेंट् हिस्टारि' नामकात् चरित्रग्रन्थादृज्ञायते । तत्र हि तृतीये सम्पुटे ४२८-४२९ पत्रयोरित्थं लिखितं दृश्यते । जरूसलम्नगरे देवस्थाने साश्वास्सूर्यरथाश्चित्रिता वर्तन्ते । मलेफियापत्तने उपलोपरि षामाश्चामा सूर्यो अश्वारूढश्चित्रितो लक्ष्यते, ईजिप्ट्देशे असिरियादेशे च ॥

गरुत्मान्सूर्य इति या कथा श्रूयते तां कथामनुसृत्य जरूसलम् देवस्थाने सूर्यो गरुत्मदाकारेण चित्रितो दृश्यते । स्वर्लोकस्य राज्ञीति सूर्यस्य नामान्तरमपि वर्तते । एवमेव चन्द्रोपासनाप्रदर्शकानि बहूनि चिह्नानि तत्र दृश्यन्ते ॥

एवमेव पुरातनानामारबीयानां जनानां सूर्याचन्द्रमसौ नक्षत्राणि च मुख्यदेवता अभवन्निति 'जार्ज् सेल्' नाम्ना पाश्चात्यविदुषा स्वीये आंग्लभाषायां भाषान्तरिते कुरान्ग्रन्थे १६५ पुटे स्पष्टमुक्तं वर्तते। ऊर्ध्वलोकास्सप्त वर्तन्त इति आरबीयानां कथा १९१ पुटे ३३६ पुटे च निगदिता वर्तते । सप्तपुरुषा अष्टमेन शुनाकं गुहायां त्रीणि शतानि वत्सरान् नव वत्सरांश्च अभवन्निति २३४ पुटे लिखितं वर्तते ॥

अत्र वत्सराणां त्रिशतानि सौराणि, चान्द्राः त्रयस्त्रिंशद्वत्सराः

द्वात्रिंशत्सौरसंवत्सरैस्समाः इति प्रतिशतं त्रयश्चान्द्राः संवत्सराः अधिका भवन्ति । आहत्य वत्सराणां त्रिशते नवसंवत्सरा अधिका भवन्तीति 'जलालुडीन्' नाम्ना आरबीयेन विदुषा एतद्विवृतमिति तत्रैव कुरान् भाषान्तरे उक्तं वर्तते । एतेन त्रयस्त्रिंशत्संवत्सरचक्रं क्रैस्तेष्विव आरबीयेष्वपि प्रसिद्धमासीदिति स्पष्टं ज्ञायते । क्रैस्तेषु त्रयस्त्रिंशत्संवत्सरचक्रं 'मेसियानिक् सैक्रल्' इति नाम्ना प्रसिद्धमासीदिति छेंबर्स् नाम्ना पाश्चात्यज्योतिर्विदुषा स्वीये 'ह्यांड् बुक् आफ् अस्ट्रानमि' इति ग्रन्थे स्पष्टमुक्तं वर्तते ॥

वेदेषु 'यह्व, कृष्णः, यशः,' इति देवतावाचकाश्शब्दाः श्रूयन्ते । ते बैबल्ग्रन्थे 'जुहोव, क्रैस्ट्, जीसस्' इति श्रूयन्ते । ब्रह्मशब्दः एब्रहाम् इति पठ्यते । ज्ञानवृक्षबोधकः पिप्पलशब्दः बैबल् इति परिणतं दृश्यते । त्रयस्त्रिंशद्वत्सरचक्रं वेदेषु सप्ताधिमासात्मकं पञ्चाधिमासात्मकं चेति द्विधा विभक्तम् । तत्र सप्ताधिमासात्मकमेव अष्टाचक्रा नवद्वारा देवानां पूरयोध्या इति अयोध्यानाम्ना अभिहितं वर्तते । द्वितीया पञ्चाधिमासात्मकं कुबेरचक्रमिति कुबेरपत्तनमिति च समाख्यातं वर्तते । कुबेरो हि वेदेतिहासपुराणेषु निधिप इति, गोप इति, धनाधिप इति, यक्ष इति चाभिधीयते । बैबल्ग्रन्थे ईजिप्ट् देशाधिपः फेरो नाम्नाभिधीयते । स च फेरोऽभिधा राजा प्रभूतधनाढ्यः गोपतिश्चाभूदिति बैबल् ग्रन्थादृज्ञायते । कदाचित् ईजिप्ट्देशे हिक्सोस् नाम्ना प्रसिद्धाः केचन गोपालकाः राजानः समभूवन्निति च बैबल् ग्रन्थविशारदाः वदन्ति । तथा च—

| | |
|---|---|
| कुबेर=फेरो, | गोपाः=गोपालका (Shepherds), |
| यक्षः=हिक्सोस्, | अयोध्या=जुडिया अथवा जोडिया. |

इत्यादि वैदिक बैबल्शब्दानां साम्यमेकमेवार्थं द्रढयति । किंच त्रयस्त्रिंशद्वत्सरचक्रे सप्ताधिमासचक्रभागो देवलोक इति पञ्चाधिमासा-

त्सकचक्रभागो मनुलोक इति नाम्ना प्रसिद्धावभूतामिति पुरै
सूचितम् ॥

ग्रहणचक्रे ये द्वासप्तत्युपरागाः सम्भवन्ति ते हि मनुनाम्ना
विख्याताः । कुबेरो हि ग्रहणकारकाणां यक्षरक्षोगन्धर्वाणामधिप इति
स एव मनुग्रहणानां चाधिपः । अतश्च कुबेरलोकः मनुलोकनाम्ना
प्रसिद्ध आसीदिति निस्सन्देहं ज्ञायते । अतश्च 'दुर्भिक्षं देवलोके
मनूनामुदकं गृहे' इति तैत्तिरीयारण्यके देवलोके यदा दुर्भिक्षं तदा
मनुलोके समृद्धिरिति यत् कथ्यते तद्बैबल्ग्रन्थे दुर्भिक्षपीडिताः एब्रहा
नामकप्रभृतयो जनाः फेरोपत्तनं जग्मुरिति कथितां कथां संवदति ॥

किं च ईजिप्ट्शब्दः गुप्तशब्दार्थमभिदत्ते। तथा च पुरा ईजिप्
देशस्य गुहा इति, गुह्यदेश इति, च नामान्यभवन्निति प्रतीयते
'गुहायां गूढा गावः इन्द्रेण विसृष्टा' इति पुनः पुनर्वेदेषु कथ्यते
गाव इति उपरागस्य नामानीति पुरा सूचितम् । बैबल् ग्रन्थे
गवामजाविकानां च कुबेरः प्रभुरासीदिति मोसस्, सालमन् प्रभृतिभि
कुबेराद्गवादिपशवो बलादास्कन्द्य वशीकृता इति कथा श्रूयते । किमि
वेदोक्ता कथा भूतार्था आहोस्वित् बैबल् कथा भूतार्था इति सन्दे
निर्णेतुं वेदबैबल् ग्रन्थयोः कूलङ्कषविमर्शनं विना न शक्यते ॥

किं च एज्कील् समाख्ये बैबल्ग्रन्थे द्वादशारं चक्रमेकं वर्ण्यते
तत्र चक्रे सप्ताराणि ऊर्ध्वभागे कृतानि । ततः होमवेदिका । तद
अधस्तात् पञ्चाराणि कृतानि । इदं चक्रं त्रयस्त्रिंशद्वत्सरचक्रस्य चक्रा
पमिति भाति ॥

किं च मिक्नामके बबल्ग्रन्थभोगै पञ्चमे स्तवके 'सप्तभिरेव
अष्टमोऽधिकः अनावश्यक' इति यत्कथितं दृश्यते तत् सप्तैव ऋषयः
अष्टमो मार्ताण्ड इति तैत्तिरीयरण्यकथां स्मारयति । एज्कील् शब्दः
चक्रशब्दस्य रूपान्तरं प्रायेण स्यात् ॥

---

# विषयसूचना

---



---

## सम्पादकीयसमितिः

१. श्रीमन्तः अर्थशास्त्रविशारदाः विद्यालङ्काराः महामहोपाध्याया डाक्टर् आर्. शामशास्त्रिणः, बि.ए., पिएच्.डि., एं.आर्. ए.एस्., विश्रान्त मैसूरु प्राच्यकोशागाराध्यक्षाः शासन विमर्शशाखाध्यक्षाश्च

२. श्रीमन्तः प्रोफेसर् सि. आर्. नरसिंहशास्त्रिणः एं.ए., मैसूर् महाराजाकालेज् संस्कृत प्रधानोपाध्यायाः

३. पण्डितरत्नं धर्माधिकारिणः ब्र. श्री. काशी शेषवेङ्कटाचल शास्त्रिणः

४. साहित्यरत्नं महाविद्वांसः ब्र. श्री. क. गोपालकृष्णशास्त्रिण महाराजाकालेज् संस्कृत पण्डिताः

५. ज्यौतिषरत्नं महाविद्वांसः ब्र. श्री. करूरु शेषाचार्याः महापाठशाला ज्यौतिषप्रधानोपाध्यायाः

६. विद्वांसः ब्र. श्री. एस्. वेङ्कटाचार्याः, महापाठशाला साहित्य प्रधानोपाध्यायाः

७. श्रीमन्तः एस्. बि. कृष्णमूर्तयः, एं.ए., महापाठशालाध्यक्षाः (सम्पादकाश्च)

# विज्ञप्तिः

भो भो महाशयाः ! सहृदयाः ! सप्रश्रयमिदमिदानीं विज्ञापयामः–संस्कृतविद्याभिमानिनः पुरुषप्रवराः यं कंचन विषयमधिकृत्य संस्कृतभाषामयं अनतिसंक्षिप्तविस्तरं उपक्रमोपसंहारपारिकर्मितं कस्याप्यनुद्वेगकरं अचर्चितपूर्वं कालदेशदशानुगुणं प्रपञ्चोपकारकरं धर्माद्यविरुद्धं "जीर्णमङ्गे सुभाषितम्" इति निर्वेदस्य "वीरा वाचैव केवलम्" इत्यपवादस्य वा प्रशमकरं प्रस्पष्टमुखविलाससुपन्यासं विलिख्य यदि प्रेषयेयुर्महान्तः, तेभ्यो महद्भ्यः समर्प्य अनन्तान् धन्यवादान् पत्रिकायामस्यां तमुपन्यासं पारयामः प्रकाशयितुम् ॥

यदीच्छति वशीकर्तुं जगदेकेन कर्मणा ।
परापवादसस्येभ्यो गाश्चरन्तीर्निवारयेत् ॥

न हीदृशं संवननं त्रिषु लोकेषु विद्यते ।
दया मैत्री च भूतेषु दानं च मधुरा च वाक् ॥

संपादकस्य.

---

# मूल्यप्रकारः

१. अस्याः पत्रिकायाः वार्षिकम् अग्रिमं मूल्यं सार्धैकरूप्यकम्
   प्रापणव्ययः (भारतमण्डले.) .... .... पादरूप्यकम्
२. विद्यार्थिनां पुनः एकरूप्यकम्. प्रापणव्ययः ,,
३. विभिन्नदेशे सपादरूप्यद्वयम् (3s.) प्रापणभृतिः अर्धरूप्यकम्

पत्रिकाप्राप्तिस्थानम्,

संपादकः,

श्रीमन्महाराजसंस्कृतमहापाठशाला, मैसूरु.

## सधन्यवादमस्माभिरङ्गीकृता एताः विनिमयरूपाः पत्रिकाः

---

1. श्री संस्कृतसाहित्यपरिषत्पत्रिका, श्रीनगरम्.
2. संस्कृत साहित्यपरिषत्पत्रिका, कल्कत्ता
3. उद्यानपत्रिका, तिरुवाडि.
4. सुप्रभातम्, काशी.
5. सूर्योदयः, काशी.
6. संस्कृतरत्नाकरः, जयपुरम्.
7. संस्कृतपद्यवाणी, कल्कत्ता.
8. मञ्जूषा, कल्कत्ता.
9. अच्युतः, काशी.
10. कल्याणम्, गोरखपुरम्.
11. मधुरवाणी, वेलगाम्.
12. देववाणी, कल्कत्ता.
13. The Mythic Society Journal, Bangalore.
14. Annals of the Bhandarkar Oriental Research Institute, Poona.
15. Review of Philosophy and Religion, Poona.
16. Journal of Oriental Research, Madras.
17. The Law College Magazine, Madras.
18. Sunday Edition, "The Hindu," Madras.
19. The Aryan Path, Bombay.
20. The Theosophical Movement, Bombay.
21. The Philosophical Quarterly, Calcutta.
22. Karnataka Historical Review, Dharwar.
23. Ardra, Ceylon.

24. "Yoga," Bulsar.
25. The Vaitarini, Chowduar.
26. Poona Orientalist, Poona.
27. The Mimamsa Prakasa, Poona.
28. Brahmavidya, Adyar, Madras.
29. Oriental Literary Digest, Poona.
30. The Jaina Gazette, Lucknow.
31. ಆಂಧ್ರ ಸಾಹಿತ್ಯಪರಿಷತ್ಪತ್ರಿಕಾ, ಕಾಕಿನಾಡ.
32. ಗ್ರಾಮಸೇವೆ, ಮೈಸೂರು.
33. ಸನಾತನಮತಪ್ರಚಾರಿಣೀ, ಘಟ್ಟವಲ್ಲಿ.
34. ಜಯಕರ್ಣಾಟಕ, ಧಾರವಾಡ.
35. ಸದ್ಬೋಧಚಂದ್ರಿಕೆ, ಆನಂದವನ.
36. ವಿಶ್ವಕರ್ಣಾಟಕ, ಬೆಂಗಳೂರು.
37. ತಾಯಿನಾಡು, ಬೆಂಗಳೂರು.
38. ಆಧ್ಯಾತ್ಮಪ್ರಕಾಶ, ಬೆಂಗಳೂರು.
39. ಕರ್ಣಾಟಕ ಸಾಹಿತ್ಯಪರಿಷತ್ಪತ್ರಿಕೆ, ಬೆಂಗಳೂರು.
40. ಕಾದಂಬರೀಸಂಗ್ರಹ, ಚಾಮರಾಜನಗರ.
41. ಪ್ರಬುದ್ಧಕರ್ಣಾಟಕ, ಮೈಸೂರು.
42. ವಿವೇಕಾಭ್ಯುದಯ, ಮೈಸೂರು.
43. The Jaina Antiquary, Arrah, Bihar.
44. ಸಾಧ್ವೀ, ಮೈಸೂರು.
45. ಗರಿಕೆ, ಮೈಸೂರು.
46. Inner Culture, California.
47. Sen Tamil, Madura.
48. ವಿಭೂತಿ, ಸಿಕಂದರಾಬಾದ್.
49. New Asia, Calcutta.
50. ಗೌರ್ನಮೆಂಟ್ ಟ್ರೈನಿಂಗ್ ಕಾಲೇಜ್ ಪತ್ರಿಕೆ, ಮೈಸೂರು.
51. 'Rising Youth', Maharaja's High School, Mysore.

॥ श्रीः ॥




# श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका

प्रतिमासत्रयं प्रकटीक्रियमाणा

" कुर्वन्नेवेह कर्माणि जिजीविषेच्छतँ समाः "

(ईशोपनिषत्)

सम्पुटम् १५] 1939–Sept.: प्रमाथी–शारदी [सञ्चिका ३


## सुभाषितानि

अञ्जलिस्थानि पुष्पाणि वासयन्ति करद्वयम् ।
अहो सुमनसां प्रीतिर्वामदक्षिणयोस्समा ॥ १ ॥

कलावतस्सैव कला ययाधःक्रियते भवः ।
बाह्यीभिश्च कलाभिः किं याभिरङ्कस्स्फुटीकृतः ॥ २ ॥

आपत्स्वेव हि महतां शक्तिरभिव्यज्यते न संपत्सु ।
अगुरोस्तथा न गन्धः प्रागस्ति यथाग्निपतितस्य ॥ ३ ॥

किं जन्मना च महता पितृपौरुषेण
शक्त्या हि याति निजया पुरुषः प्रतिष्ठाम् ।

कुम्भा न कूपमपि शोषयितुं समर्थाः
कुम्भोद्भवेन मुनिनाऽम्बुधिरेव पीतः ॥ ४ ॥

कामं वनेषु हरिणास्तृणेन जीवन्त्ययत्नसुलभेन ।
विदधति धनिषु न दैन्यं ते किल पशवो वयं सुधियः ॥ ५ ॥

एते स्निग्धतमा इति मा मा क्षुद्रेषु यात विश्वासम् ।
सिद्धार्थनामेषां स्नेहोऽप्यश्रूणि पातयति ॥ ६ ॥

दानोपभोगहीनेन धनेन धनिनो यदि ।
भवामः किं न तेनैव धनेन धनिनो वयम् ॥ ७ ॥

असंभोगेन सामान्यं कृपणस्य धनं परैः ।
अस्येदमिति संबन्धो हानौ दुःखेन गम्यते ॥ ८ ॥

अर्था न सन्ति न च मुञ्चति मां दुराशा
त्यागे रतिं वहति दुर्ललितं मनो मे ।
याच्ञा च लाघवकरी स्ववधे च पापं
प्राणास्स्वयं व्रजत किं नु विलम्बितेन ॥ ९ ॥

एको हि दोषो गुणसन्निपाते
निमज्जतीन्दोरिति यो बभाषे ।
न तेन दृष्टः कविना किमेको
दारिद्र्यदोषो गुणकोटिहारी ॥ १० ॥

अन्तस्सारविहीनस्य सहायः किं करिष्यति ।
मलयेऽपि स्थितो वेणुर्वेणुरेव न चन्दनः ॥ ११ ॥

यौवनं जरया ग्रस्तमारोग्यं व्याधिभिर्हतम् ।
जीवितं मृत्युरभ्येति तृष्णैका निरुपद्रवा ॥ १२ ॥

तुल्यं भूभृति जन्म तुल्यमुभयोर्मूल्यं च तुल्यं वपुः
तुल्यं दार्ढ्यमुदग्रटङ्कदलनं तुल्यं च पाषाणयोः ।
एकस्याखिलवन्दनाय विधिना देवत्वमारोपितं
तद्द्वारे विहिता परस्य तु पदाघातास्पदं देहली ॥ १३ ॥

सि. आर्. नरसिंहशास्त्री, एं.ए.
संग्रहीता.

# प्रबन्धनिकषः

(श्रीशङ्करगुरुकुलपात्रिका)

प्राक्तनैः पण्डितरूपैः प्रणीतानां प्रबन्धानां लुप्तप्रायाणां लुप्तानां च प्रचारणार्थमेषा सुरभाषामयी मासपत्रिका जनिमुपागता। अस्याश्च सम्पादकः श्रीमान् बालसुब्रह्मण्यार्यमहाभाग इतः पूर्वमेव श्रीशङ्करग्रन्थावलिमुद्रणादिना दार्शनिके जगति चिरपरिचितो विराजते। सहकारी चास्य समुचिताधिकारं प्राप्तः श्री पि. पि. सुब्रह्मण्यशास्त्रि-महोदय इति हेतुः परमामोदः। लेखकाश्च **श्रीश्रीमत्परमहंसेत्यादि-विरुदभूषिताः चन्द्रशेखरभारतीस्वामिनः, श्रीश्रीसच्चिदानन्द-तीर्थस्वामिनः,** कल्याणपुरीशङ्करपाठशालाध्यक्षाः श्रीवेङ्कटेशशास्त्रिण इति न खलु किमपि पश्यामो न्यूनतानिदानम्। शोधनविषये च महती श्रद्धा समादृतेति सन्तोषेण पुनर्वदामः॥

प्रथमसञ्चिकायामस्मत्करगतायां समादरणीयास्समालोचनीयाश्च विषयास्समुल्लसन्ति। तत्र शृङ्गेरीमठाधिपतिभिरनुगृहीता **'मीनाक्षी-स्तुतिः'** मृदुमधुरपदसन्दोहसन्दर्भगर्भा गम्भीरभावभासुरा च परिणत-पण्डितानां कवीनां च हृदयानि समावर्जयति॥

**'शान्तिपारम्यमीमांसा'**ख्यस्समुचितो लेखः नैस्पृह्यतद-भावाभ्यां प्राक्तनाधुनातनयोः सूक्ष्मेक्षिकया वैलक्षण्यसमीक्षणपूर्वकं भारतीयदार्शनिकानां जीवातुभूता शान्तिरेव परमगरीयसीति परम-रमणीयशैल्या निरूपयति॥

अथान्यः **'सर्वदर्शनानामद्वैतानुगुणत्व'**मिति विषयः विबुधवरवेङ्कटेशशास्त्रिमहाभागेन नैकतन्त्रसमालोचनसहकारं विरचितः दर्शनरसिकानां समालोचने कौतूहलमुत्पादयति।

तत्र लेखकमहोदयः,—

'प्राणिनस्सुखार्थं प्रयतन्ते, दुःखप्रहाणाय निवर्तन्ते (?)'

इत्युपक्रममाणः—

'भिन्नभिन्नप्रस्थानानि खलु अधिकारिभेदनिबन्धनानि परमकारुणिकः परमेश्वर एकपरमतात्पर्येणैव प्रणिनाय। तच्च परमतात्पर्यं श्रुतिशिरःप्रतिपाद्येऽद्वैत एवेति 'निस्सङ्कोचमाख्यातुं' प्रभूयते। अन्योन्यप्रत्यनीकान्यपि वैदिकदर्शनान्यात्मनो विभुत्वनित्यत्वचितिस्वरूपत्वादिविषयेऽद्वैतिमतमनुधावन्ति। अख्यात्यादिविषये सत्कार्यादिविषये च वादिनामन्योन्यप्रत्यनीकतैवाद्वैतवादीयानिर्वचनीयख्यातिकार्यप्रमुखान्सिद्धान्तान्द्रढयति। तत्तत्प्रास्थानिकैर्यथास्वं कृतमितरमतविधूननं 'नहि निन्दान्यायेनैव'। किं बहुना, चार्वाकबौद्धादिबाह्यदर्शनान्यपि धर्मसाधन शरीरदार्ढ्य—वैराग्यसम्पादनमुखेनाद्वैतमतानुगुणान्येवेति **'सर्वोपकार्यमद्वैतदर्शनम्'** ॥

इति उपसंहरति।

अत्र काचन विचिकित्सा मम चेतासि चकास्ति; सत्यं, वेदज्ञाः दार्शनिका एकपरमतात्पर्येणैव प्रवृत्ता इति। परन्तु तत्परमतात्पर्यं कुत्रेत्यत्र तु महान्विवादो दृश्यते। तत्र विनिगमकं किमिति?

पुरा खलु महर्षयः केचन जीवतत्त्वं, केचन प्रकृतितत्त्वं, केचन योगतत्त्वं, केचन कर्मतत्त्वं, केचन च ब्रह्मतत्त्वमवलम्बमानास्तदितरार्थसार्थस्य गौणतामास्थाय मिथः प्रत्यनीकार्थप्रतिपादकान्वेदान्समरसतामानेतुं प्रायतन्त। तत्फलेनैव खलु षण्णां दर्शनानां समुद्भवः। तेष्वपि श्रीमद्बादरायणप्रणीतवेदान्तदर्शनमेव दर्शनचरमशिखरमधिरूढो विराजते। गच्छता कालेन तत्रापि भेदाभेदभेदाभेदाचिन्त्याभेदवादादिकमास्थाय प्राचीनाचार्यपादाः यथानिसर्गं वेदान्तसूत्राणि विवरीतुमारेभिरे।

तत्फलेनैव माध्व-शाङ्कर–रामानुज–निम्बार्क–वल्लभ–चैतन्यप्रभृतिप्राचार्याणां मतानि प्रादुरभूवन्। एतावता हि मौलिकगवेषणायुगस्यावसानम्। तदनन्तरं प्राक्तनदर्शनसमन्वययुगसमुद्भवः। तत्रानुपमप्रतिभावतार उदयन एव प्रधानः पुरोधाः। स क्रिस्तदशमशताब्द्यां समेषामपि दर्शनानां न्यायदर्शनानुगुणतामभाणीत्। स त्वात्मतत्त्वविवेके नानादर्शनानां विषयभेदमुद्भवनिदानं चोपवर्णयन्नूचे—श्रवणमननादौ प्रसक्तस्य मुमुक्षोः प्रथमतः बाह्या एव पदार्थाः स्फुरन्ति; तानाश्रित्यैव कर्ममीमांसाया उपसंहारश्चार्वाकमतोत्थानं च। तदनु तस्य अर्थाकारेण — ग्राह्यविषयाकारेणात्मावभासते; तमाश्रित्यैव त्रैदण्डिकस्योपसंहारः योगाचारबौद्धमतस्योत्थानम्; तादृशीमवस्थां प्रदर्शयितुमेव श्रुतिर्वदति 'आत्मैवेदं सर्व'मिति। एवमेवोदयनः साधकस्य नानामतोत्थानेन क्रमिका नानाविधा अवस्थाः प्रादुर्भवन्तीति निरूप्य, यस्यामवस्थायां केवलमात्मन एव प्रकाशस्तदेव तामवस्थामवलम्ब्यैक्यमतोपसंहारः; तस्यां खलु साधकस्यात्मोपासनापरिपाकेणात्मातिरिक्तस्य कस्यापि वस्तुनः प्रकाशो न भवतीत्यभिप्रैति। तदनु चान्ते **'निर्वाणन्तु तस्याः स्वयमेव, यदाश्रित्य न्यायदर्शनोपसंहार'** इति न्यायदर्शन एव तात्पर्यमभ्युपैति। किञ्च स एवैक्यश्रुतीनां सर्वासामपि न्यायमतोपयोगितामेवोपपादितवान्[1]॥

---

1 "आम्नायसारसंक्षेपस्तु 'अशरीरं वाव सन्तं' इत्यादि। तदप्रामाण्यं प्रपञ्चमिथ्यात्व–सिद्धान्तभेद–तत्त्वोपदेश–पौनःपुन्येष्वनृतव्याघातपुनरुक्तदोषेभ्य इति चेन्न, सतात्पर्यकत्वात्। निष्प्रपञ्च आत्मा ज्ञेयो मुमुक्षुभिरिति तात्पर्यं प्रपञ्चमिथ्यात्वश्रुतीनाम्। आत्मन एवैकस्य ज्ञानमपवर्गसाधनमित्यद्वैतश्रुतीनाम्। दुरूहोऽयमिति पौनःपुन्यश्रुतीनाम्। बहिस्सङ्कल्पत्यागो निर्ममत्वश्रुतीनाम्। आत्मैवोपादेय इत्यात्मश्रुतीनाम्। गारुडवदनुष्ठाने तात्पर्यं प्रकृत्यादिश्रुतीनाम्। तन्मूलानां सांख्यादिदर्शनानां चेति नेयम्। अन्यथा "जैमिनिर्यदि वेदज्ञः कपिलो नेति का प्रमा? उभौ च यदि वेदज्ञौ व्याख्याभेदस्तु किङ्कृतः"॥ आत्मतत्त्वविवेके॥

एवं साङ्ख्याचार्यः विज्ञानभिक्षुरपि साङ्ख्यप्रवचनभाष्य-भूमिकायां स्वाभिमत एव सर्वदर्शनानां समन्वयं कर्तुं प्रयतते। स खलु साङ्ख्यप्रकृतिं पातञ्जलेश्वरं च वेदान्तपरिच्छेदेन समलङ्कृत्यैकविधं समन्वयमभिप्रैति—

> "प्रकृतिर्ब्रह्मणश्शक्तिः, जीवा ब्रह्मणोंऽशभूताः, ते तु प्राणादय इव जडरूपेणानात्मानः । ते निखिलवेदवेद्यं परं ब्रह्म 'स मे आत्मा' 'सोऽह'मिति च रूपेण, मायाजीवादिभिः पृथग्रूपेण ज्ञात्वाविद्याकामकर्मादिक्षये सति निखिलदुःखाद्विमुक्ता भवन्ति । जीवब्रह्मणोरविभागत्वमेव अभेदपरश्रुतीनां, न च लक्षणापत्तिः, 'भिदिर् विदारण' इति धातुपाठेनाविभागस्यापि तदर्थत्वात्"

इति वदति ॥

विज्ञानभिक्षुर्ब्रह्मणः कारणत्वविषये एवं वदति—'ब्रह्मणश्च स्वाविभक्ते प्रकृत्याद्युपष्टम्भकत्वं साक्षितामात्रेणेति जगत्कारणत्वेऽपि न ब्रह्मणो विकारित्वं, न वा प्रकृतिपुरुषादिष्विति प्रसङ्गः। सर्गात्पूर्वमन्येषां साक्षित्वासम्भवात्'(विज्ञानामृतभाष्यम्)॥

'अस्माभिस्तु विलक्षणतया चतुर्थमाधारकारणत्वमिति'॥

अधिष्ठानकारणत्वं किम्?

> 'तदेवाधिष्ठानकारणत्वं येनोपष्टब्धं च सदुपादानं कारणं कार्यकारणेन परिणमते'॥

एतादृशाधिष्ठानकारणवादेन वैशेषिकसाङ्ख्यप्रभृतीनां नास्ति विरोधः॥

> 'सम्भवत्यविरोधे सृष्टिप्रक्रियायां वैशेषिकसाङ्ख्ययोरप्यत्र विरोधानौचित्यादिति । वैशेषिकादिभिरपीदृशं ब्रह्मणः कारणत्वमिष्यत एव'॥

एवमेव स तत्र तत्राद्भुतमदृष्टाश्रुतपूर्वमनैसर्गिकमयौक्तिकं च मतमुत्प्रेक्ष्य सर्वत्र समन्वयं कर्तुं यतते । विस्तरभिया नेह प्रतन्यते ॥

एवं 'त्रामकेश्वर' तन्त्रव्याख्यायां भास्कररायोऽपि दर्शनानां वैषम्यं व्युदसितुं यतमानो दृश्यते । सत्येवं, यथा बहूनि दर्शनानि प्रादुर्भूतानि, तथैव तेषां समन्वयप्रतिपादकान्यपि शास्त्राणि बहूनि प्रादुर्भवेयुः, प्रादुर्भूतानि च प्राक् । उदयनवादेनापि विवादशान्तिर्नाभूत् । न भविष्यति च भविष्यत्यपि । दार्शनिकराज्ये समन्वयवादः (Syncretism) दोषाय कल्पते । जर्मनिदेशेऽपि कान्ताविर्भावतः प्रागेकसमन्वयवादसङ्घः समासीत् । तेनापि न किमपि फलमुदभूत् । समन्वयवादे प्रधानो दोषः यौक्तिकतावैधुर्यम् । परस्परप्रत्यनीकानां मतानां समन्वयस्सुतरामसम्भावितः । अन्योऽपि कश्चन सङ्घो दृश्यते, स खलु चयनवादे वा सङ्ग्रहवादे वा (Electicism) पक्षपाती । ग्रीक्देशे चयनवादिनः प्राग्भारतवर्षेऽद्य बहुधा दृष्टिगोचरा भवन्ति । धर्मे दर्शने च चयनवादोऽनैसर्गिकः । तेन दार्शनिकानां तृष्णा नापयाति । निरवकाशयुक्तेरप्यभावः । एतादृशसमन्वयेन नापि विवादोपशमः । सोऽपि वा नातिचिरन्तनः । चरमसिद्धान्तः क इत्यत्र सर्वसम्मतमुत्तरं न विद्यते । सर्वोऽपि सम्प्रदायः लेखकोक्तयुक्त्या स्वस्वसिद्धान्तस्यैव चरमत्वमभ्युपैति खलु । तथाधिकारिभेदमाश्रित्येतरसिद्धान्तस्य किं किं वोद्देश्यमप्युपवर्णयति । अन्यसिद्धान्तं कोऽपि चरमतया नाङ्गीकरोति । सत्येवमीदृशवादेन विवादविरतिः कथम्? तत्तदीयानादिसंस्कारवशत एव तत्तन्मतेषु तत्तद्वादिनां समादर इति परमरहस्यम् । अत एव परमप्राचीनाः समन्वये नैव प्रायतन्त । न्यायभाष्यकारस्तु 'अन्योन्यप्रत्यनीकानि प्रावादुकानां दर्शनानि' इति वदति । एवमेवेतरेऽपि दार्शनिका महर्षयोऽभिप्रयन्ति । इतरथा समन्वयवादारम्भे सर्वेऽपि स्वस्वाभिमतार्थे समरसतां प्रतिपादयितुमेव यतेरन् ।

तथासति दर्शनसमसंख्याकाः समन्वयवादा एव प्रादुर्भवेयुः। दर्शन खलु दर्शनबाहुल्ये यावस्था, सैव समन्वयानेकत्वेऽपि प्राप्नोति। ततश्चानेकसमन्वयानामप्येकत्र समरसता नेयेत्येवंरीत्यानवस्थादौःस्थ्यम्। तस्मात्समन्वयवादेन नैव विवादोपशमः। किन्तु विवादाभिवृद्धिरेवेति जानीमः। आगमानां हरप्रणीतत्ववचनामिव हरिविरचितत्ववचनमपि न दुर्लभम्। तत्तत्प्रस्थानेऽधिकारिभेदोऽपि नातीव गवेषणीयः। 'नहि निन्दान्यायो'ऽपि नातिरोहितः। शरीरदार्ढ्यादिकं कस्य वा दर्शनस्य धर्मस्य वा नोपयोगि? क्षणिकत्वशून्यत्वमिथ्यात्ववादा अपि किं वैराग्यजननादौ न समुपयुक्ता भवन्ति! ततोऽप्यातिवादसमरसम्प्राप्तौ **'न हि निन्दान्यायः'** ब्रह्मास्त्रायितो जागर्ति खलु! तस्मादीदृशसमन्वयप्रयासः वक्तृमुखरोचकः श्रोतृहृत्तोषकः शास्त्रवित्तापहारकश्चेति जानीमः॥

तस्मादस्मभ्यं समन्वयवादो नातीव रोचते। नानासमन्वयवादेषु युक्तिचालनेन युक्तसमन्वयग्रहणे दर्शनेष्वेव सा रीतिरस्तु; कृतं सुदूरधावनेनेति विस्तरभिया विरमामो विवेचनात्। अधिकं कालान्तरे विवेचयिष्यते॥

परन्तु पत्रिका चैषा पूर्वोत्तरमीमांसानाटकचम्प्वादिसुदुर्लभप्राचीनप्रबन्धप्रकाशपरायणा नवीनविमर्शनधोरणीधारिणी च भूत्वा चिरं जीवताद्दार्शनिके जगतीत्याशास्महे॥

का. प्राणेशाचार्यः

व्यम्, यतः भर्तृप्राप्तिसादृश्यतन्नैषा ह्रीमत्त्वा न प्रथेतेति । नन्वेवं तर्हि स्वायत्तशब्दप्रयोगो महर्षिः 'भर्तारमेव सम्प्राप्ते' त्येवावक्ष्यत्, यद्येवमर्थमवाबुबोधयिषिष्यत् । नावक्ष्यत्, यत्कारणं रसिकाग्रणीः औचित्यमार्मिकश्च, तत्कारणमेव जगन्मातुः सम्भोगवर्णनं अतितरामसाम्प्रदायिकमजानादिति, ह्रीमत्त्वनिवेशनतन्त्रमेवैवञ्जातीयकार्थावधृती रसिकजनहृदयमधिरोक्ष्यतीति च, यतोऽभिसन्धत्ते ॥

तदिहैवमभिसन्धाना प्रयुक्तिः 'भर्तारमिव सम्प्राप्तेति' ह्रीमती बालेति' चेति स्फुटितम् ॥

नन्वथापि युवतिजनो ध्यायति इति साहसमेतत्, ततस्तराञ्च सार्वभौमीयभोगप्रवणजन इति । इह च भर्तृकरविभूषणदर्शनमात्रनिदानाः तदसाधारणगुणपूगलक्षणपूगानुसन्ध्यधीनध्यानसाक्षात्कारमोदभोगह्रिय आख्यायन्ते भवता, कथमिवैतत् घटिष्यत इति चेत्— परिहृतमेतत् 'जानकी'ति प्रयुञ्जानेन महर्षिणा । जनको हि याज्ञवल्क्याद्यनुशिष्टब्रह्मध्यानोऽसकृत् ध्यायं ध्यायं समाहितोऽदर्शी इत्यत्यन्तरूढध्यानसंस्कारामेनामवगच्छन्तु नाम काव्यमिदमधीयाना रासिका इत्येवमभिसन्धानैव जानकीति प्रयुक्तिरिति ॥

द्रढयति चैवञ्जातीयकमर्थं 'अशोभत विशालाक्ष्या राहुमुक्त इवोडुराट्' इति तदुत्तरावस्थां विशिंषन् महर्षिः । 'अखिलकलापरिपूर्णस्य परमसुन्दरस्यापि चन्द्रमसो राहुग्रहणनिमित्तं असौन्दर्यं निवर्त्यते तद्ग्रहविमोकेन, अथ चैष शोभते । इह च रामादर्शनजं दुःखं राहुग्राहमहीदेनां, ध्यानसाक्षात्कारापोहितदुःखा चैषाऽशोभत' इत्येवमर्थत्वात् तस्य ॥

एवमेष साक्षात्कारो भविष्यतीति, दुःखञ्चैषापहास्यतीति मन्वान आञ्जनेय आहाङ्गुलीयकमस्या अर्पयन्—

'समाश्वासहि भद्रं ते क्षीणदुःखफला ह्यसि' इति ।

तत एवञ्जातीयके प्रघट्टक एवेत्यस्यार्थाय 'इव' इति प्रयुङ्क्ते महर्षि-
रिति स्फुटितम् । ततस्तराञ्च वेदच्छायं वचनमिति ॥

क्क पुनरेष कविः पूर्वसूरिणोऽनुसरति ? यत्र तन्त्रतया निर्दिश-
न्नर्थान्तरमवजिगमयिषति, येनानुरुद्धप्रतिज्ञः प्रथेत । ननूपन्यस्तमादिमे
श्लोक इति । सत्यमुपन्यस्तं, असम्बद्धं तत्, यत्कारणमङ्गीकृतैवार्थ-
कैवकारणान्नो निर्लुठ्य गर्भं विमृशतामपि नादिमकाव्यभायं भात्यध्य-
यननिरतिपरमधर्मतावगमक एष श्लोकः, योऽसौ ॥

'वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये ।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ' ॥ इति ॥

अथ कीदृगर्थावगमक एष प्रथत आयुष्मतामिति ? पर्यनुयुज्महे ।
ननु वागर्थसम्पर्के नित्यसम्पृक्तप्रपञ्चमातापितृमृडानीशशिशेखरवन्दनाया-
मायतते शब्दार्थाभिन्नाखिलशास्त्रार्थसम्प्रत्यय इति सैषैतदीप्सुभिरवश्य-
माचरितव्येत्येवमर्थावगमक इति चेत् ॥

हन्त 'शब्दार्थाविव सम्बद्धौ शब्दार्थप्रतिपत्तये । प्रपञ्चजनकौ
वन्दे मृडानी शशिशेखरौ' ॥

इत्येवमादि प्रयुञ्जानोऽपीदृगर्थमवगमयेत् । ननु भिन्नलिङ्गौपम्य-
तापातरोगोऽस्य केन भिषज्येत, यः प्रयुञ्जीत 'शब्दार्थाविवे'ति चेत्
तेनैव 'गीरर्थाविवे'ति प्रयुञ्जानेन भिषज्येत, इति वदामः ॥

अथवा —'द्वेष्योऽपि सम्मतश्शिष्टस्तस्यार्तस्य यथौषधम् ।
त्याज्यो दुष्टः प्रियोऽप्यासीदङ्गुलीवोरगक्षता' ॥

'वत्सस्य होमार्थविधेश्च शेषमृषेरनुज्ञामधिगम्य मातः ।
औधस्यमिच्छामि तवोपभोक्तुं षष्ठांशमुर्व्या इव रक्षितायाः' ॥

'अथ नयनसमुत्थं ज्योतिरत्रेरिव द्यौः
सुरसरिदिव तेजो वह्निनिष्ठ्यूतमैशम् ।

नरपतिकुलभूत्यै गर्भमाधत्त राज्ञी
गुरुभिरभिनिविष्टं लोकपालानुभावैः ॥ '

इत्यादावेषरोगो येन भिषज्यते तेनेति ब्रूमः ।

अवश्यञ्चैवमेवैतत् प्रयोक्तव्यम्, शब्दार्थाविवेति, यतः पौराणिकीमनुशिष्टिमनुसंधत्ते । तथाहि वायुपुराणम्—

'शब्दजातमशेषन्तु धत्ते शर्वस्य वल्लभा ।
अर्थरूपं यदखिलं धत्ते मुग्धेन्दुशेखरः ' ॥ इति ॥

यतस्तताच्चाखिलशास्त्रार्थमार्मिक एष इति काव्यमालोडयतां सुव्यक्तम् । तथा हि शब्दशास्त्रं परिष्कुर्वतामनुक्रमणं 'सिद्धे शब्दार्थ सम्बन्ध' इति, न तु 'वागर्थसम्पर्क' इति । औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्ध' इति च धर्मं जिज्ञासमानानां, न तु वाचोऽर्थेन सम्पर्क इति । अनया च प्रणाल्या शास्त्रान्तराणि प्रणयतां अनुक्रमणं व्याख्यातम् । तत् कथमेष 'शब्दार्थाविवेति' प्रयोगमर्यादामुपरुन्धीतेति ॥

वयन्तु पश्यामः—'नोपरोधो गतिसामान्यात्' इति ॥

किंन्तत् गतिसामान्यम्?—समानप्रवृत्तिता समानावगतिताचेत्याह ।

'अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा' इति स्मर्तारे गच्छन्ति—प्रवर्तन्ते ॥

युगान्तेऽन्तर्हितान्वेदान् सेतिहासान् महर्षयः ।
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयम्भुवा ॥

इत्यादिवत् । तद्वेदाख्यां वाचमिहैवंविशेषणां निर्दिष्टामवगच्छामः । वैदिकसंस्काराहितातीन्द्रियार्थावगतिशक्तयो महर्षयोऽभीष्टाखिलार्थसंपायित्रीं देवीं वाचमाविरभावयन् । सैषा बन्धावस्थावद्भिरधिकारिभिरनेकैरधीयते । सा चान्नबलाद्युपलक्षिताखिलेष्टरूपदोहजननीति धेनुरस्मत्स्तुतितुष्टा नोभ्ये तु' इत्येवमर्थमाचक्षाण अम्नायो गच्छति—प्रवर्तते ॥

'देवीं वाचमजनयन्त देवाः तां विश्वरूपाः पशवो वदन्ति। सा नो मन्द्रेषमूर्जं दुहाना। धेनुर्वागस्मानुपसुष्टुतैतु' इति ॥

अनयर्चाखिलेष्टप्रदां वेदरूपां वाचमवगच्छामः। 'उपासन-तोषितैषा मूकेभ्यो वाचं, राष्ट्रकामेभ्यो राष्ट्रं, चतुर्दिग्देवता अधिष्ठा(?) क्षीरजलादिकामेभ्यस्तत्तत् दद्यात्। तत्साध्यं परमं स्थानं चानासादित-साधनसंपत् नरो न लभेतामृतत्वाख्यम्' इत्यन्यदस्या विशेषणमाच-क्षाण आम्नायो गच्छति—प्रवर्तते ॥

यद्वाग्वदन्त्यविचेतनानि। राष्ट्री देवानां निषसाद मंद्रा। चतस्र ऊर्जं दुदुहे पयांसि। क्वचिदस्याः परमं जगाम' इति ॥

एवं 'शुद्धसत्वप्रधानतदुपासनयैषा परब्रह्माख्यामृतत्वप्रापवाणी सृष्ट्युपक्रमे सलिलसदृशानान्तशब्दरूपेण विवर्तमाना, प्रणवात्मकैकपदी, व्याहृतिगायत्र्यात्मकाद्विपदी, वेदचतुष्टयात्मकचतुष्पदी, षडङ्गपुराणधर्म-शास्त्रात्मकाष्टापदी, न्यायसाङ्ख्ययोगपाञ्चरात्रपाशुपतायुर्वेदधनुर्वेदगान्ध-र्वात्मकनवपदी। अनन्तवाक्यपदैश्चानेकरूपासम्पन्ने'त्यपरं विशेषण-माचक्षाण आम्नायो गच्छति—प्रवर्तते ॥

गौरी मिमाय सलिला नितक्षती। एकपदी द्विपदी सा चतुष्पदी अष्टापदी नवपदी बभूवुषी। सहस्राक्षरा परमे व्योमन्' इति ॥

'किं बहुना समुद्रसदृशापारवेदरूपाया अस्या अभ्यासे(न) एतदुपदिष्टार्थानुष्ठानेन च चतुर्दिक्काः प्राणिनः सर्वे तत्तदवस्था-सम्पन्नाः। विशिष्टाधिकारिणः पुनरस्याः सारं प्रणवाख्यमुपास्य जप्त्वा वा अमृतत्वं प्राप्ताः' इत्युक्तार्थमुपसंहरन्नपर आम्नायोऽसङ्कुचितमस्या ऐश्वर्यमाख्यान् गच्छति—प्रवर्तते ॥

तस्यां समुद्रा अधिविक्षरन्ति। तेन जीवन्ति प्रदिशश्चतस्रः। ततः क्षरत्यक्षरं। तद्विश्वमुपजीवति' इति (तैत्तिरीय ब्रा.—२ अष्ट. ४ प्रपा. ६ अनु.) ॥

'अनन्तामन्तादधिनिर्मितां महीं। यस्यां देवा अदधुर्भोजनानि। एकाक्षरां द्विपदां षट्पदाञ्च। वाचं देवा उपजीवन्ति विश्वे ॥

'वाचं देवा उपजीवन्ति विश्वे। वाचं गन्धर्वाः पशवो मनुष्याः। वाचीमा विश्वा भुवनान्यर्पिता। सा नो हवं जुषतामिन्द्रपत्नी' ॥

इन्द्रस्य–परमेश्वरस्य पालयित्री, परममैश्वर्यमुपासकाय सम्पाद्य पायादित्यर्थः निगदव्याख्यातमन्यत् ॥

'वागक्षरं प्रथमजा ऋतस्य। वेदानां मातामृतस्य नाभिः। सा नो जुषाणोपयज्ञमागात्। अवन्ती देवा सुहवा मे अस्तु' ॥

यैषा प्रणवात्मिका, यागविधात्री, अखिलवेदरूपा, उत्कृष्टपदवा, सैषा प्रीयमाणा द्रव्यादियज्ञमस्मदीयं आगच्छतु, अवतु च। प्रत्याह्वानं च सन्निदधातु इत्यर्थः ॥

'यामृषयो मन्त्रकृतो मनीषिणः। अन्वैच्छन् देवास्तपसा श्रमेण' तां देवीं वाचं हविषा यजामहे। सा नो दधातु सुकृतस्य लोके। (निगदव्याख्यातैषा) इत्यादय आम्नायाः गच्छन्ति–प्रवर्तन्ते। यतो यतः परममैश्वर्यं सम्पादयति वागित्यवगच्छामः। तै. ब्रा. २ अष्टक ८ प्रपा. ८ अनु.) ॥

सैषा स्मार्ती श्रौती च गतिरास्थेया इति कविर्गच्छति–प्रवर्तते। तत् समानमेवावगच्छामो वाक्परमेश्वरीति। तन्न मात्रयापि वेदमर्यादातः प्रच्यवेत कविरिति व्यक्तम् ॥

ननु विषम उपन्यासः। वाक् पार्वती। अर्थः परमेश्वरः। इति कविवादः। न वाक्परमेश्वरीति इति चेत्–तत्रैवं पृष्टो भावान् व्याचष्टाम्। अर्थ इति कः पदार्थ इति। ननु वाक् वेदश्चेत् अर्थो वेदार्थ इति नः सम्प्रत्ययः। स च परमेश्वरः। द्वयी हि वेदार्थस्य गतिः। प्रेयस्साधनी श्रेयस्साधनी चेति। यदाहाम्नायो विशिष्टमधिकारिणं मोक्षभिन्नार्थे विरागिणं करिष्यामीति प्रवर्तमानः ॥

'अन्यच्छ्रेयोऽन्यदुतैव प्रेयस्ते उभे नानार्थे पुरुषं सिनीतः। तयोः श्रेय आददानस्य साधु भवति हीयतेऽर्थात् य उ प्रेयो वृणीते' ॥

'श्रेयश्च प्रेयश्च मनुष्यमेतस्तौ संपरीत्य विविनक्ति धीरः। श्रेयो हि धीरोऽभिप्रेयसो वृणीते प्रेयो मन्दो योगक्षेमाद्वृणीते' इत्येवञ्जातीयकः। इति चेत् ॥

हन्तैवं व्याचक्षाणेन वेदेन विधीयमानोऽर्थः परमेश्वर आख्यातः। तद्यदि अध्ययनग्राह्यो वेदोपि विधिना विषयीक्रियेत, कुतस्त्योऽस्य वेदार्थतातः प्रच्यवः? अधीमश्च 'स्वाध्यायोऽध्येतव्यः' अष्टवर्षं ब्राह्मणमुपनीत। तमध्यापयीत' (सोधीयीतेत्यस्यार्थ इति मीमांसकमर्यादा) इत्यादिविधीनाम्। 'अनधीयाना व्रात्या भवन्ति' ॥

'योनधीत्य द्विजो वेदानन्यत्र कुरुते श्रमम्।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः' ॥

इत्यादिना च तदावश्यकतायाः। अप्रच्यवे च वेदार्थताता वाचां कुतस्तरां पारमैश्वर्यात् प्रच्यवेत? यतो मोक्षभिन्नाखिलेष्टरूपं प्रेयो वा मोक्षरूपं श्रेयो वा वेदाभ्यासे आयतते। तस्यैतस्यार्थस्य दिङ्मात्रमुदाहृतं ऋग्विधानादिवचनान्युपन्यस्यता पारमर्षादिमश्लोकव्याख्यानावसरे। विस्तरस्तु आकरतोऽवधेयो विस्तरभयान्नेह प्रतन्यते। तस्मात् वागपि पारमेश्वरीति सिद्धम् ॥

अत्र वदामः नैवं सिध्यति परमेश्वरीति। किं कारणम्? उपचरितार्थत्वं। अस्ति यूपीयो मन्त्रः 'दिवमग्रेण मा लेखीः, अन्तरिक्षं मध्येन मा हिंसीः, पृथिव्या सम्भव' इत्येवमादिः। अस्ति च क्षुरीयः 'ओषधे त्रायस्वैनं स्वधिते मैनं हिंसीः' इत्येवमादिः। एवञ्जातीयकेषु चेतनवदुपचार इति स्थितिः। अस्ति च ऋषभीयः ॥

'चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य । त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यान् आविवेश' इति ॥

'यज्ञ एवंलक्षणकः कथं चिदुपचर्यत इति स्थिति, नैतादृशो वृषभः समस्तीति । एवमिह यागीया देवता मन्त्रेण स्तूयत इति स्थित-मुपचरितार्थत्वमिति नयमर्यादेति । तामेनामुपरुन्धीत मन्त्रार्थतन्त्रं पारमैश्वर्यमाख्यान् इति चेत्—तत्र ब्रूमः—

'नोपरोधो गतिसामान्यात्' इति ॥

नैके ह्याम्नायाः गच्छन्ति—प्रवर्तन्ते, ये वाचमाख्यान्तीत्यवोचाम तन्न प्रस्मर्तव्यम् । अवोचाम च सममेवैभ्य आम्नायेभ्यः पारमैश्वर्यमवगच्छाम इति, नतरां तदपि प्रस्मर्तव्यम् । ततः सिध्यति पारमैश्वर्यमस्याः । अभ्यासे हि भूयस्त्वमर्थस्य भवति । न न्यूनत्वम् । प्रागेवोपचरितत्वमिति । एवं वा—

'नोपरोधो गतिसामान्यात्' ॥

नैनां नयमर्यादामुपरुणद्धीति प्रतिजानीमहे । किं कारणम्? गतिसामान्यमेव । यथा यथैषा साधकैः प्रार्थ्यमानतया नैकमन्त्रैः प्रतिपाद्यते, यतो यतः पारमैश्वर्यमवगच्छेम, तथा तथैवैषा वाग्देवी नैकमहिमानमात्मानमाख्यातीति सममेव वाच आत्मीयवचननिबन्धनं परमैश्वर्यमवगच्छामः ॥

इदमिहादावाक्षेपकैरवधर्तव्यम् । 'स्यात् तत्तद्देवतानां साधकानुग्रहार्थः रामकृष्णादिवत् तत्तत्पुत्राद्यात्मनावतार' इति । असूचि चायमर्थ इहैव सर्वमङ्गलां पार्वतीति व्याहरता महाकविना । अनया च प्रणाल्या वाग्देव्या अप्यवतीर्णायाः आत्मीयवचनात्तत्पारमैश्वर्यमवगच्छन्तु सर्वे इति तदभिसन्धिः । अन्यथा हि शर्वाणीशशिशेखराविल्याद्येवाचक्षीतेति ह्युक्तम् ॥

इह चैवमाभाणकः ‘उपासकमम्भृणं महर्षिमेषा वृणन्तं त्वत्पुत्री-त्वेनावतरिष्यामीत्यन्वगृह्णात्। अवातरच्च। सैषैवमात्ममहिमानमवगम-यति, यथा साधकवचनानी’ति। आह चानुक्रमणिकाकारः भगवान् कात्यायनः। ‘अहमष्टौ वागम्भृणी तुष्टावात्मानं’ इति। ननु वाक् स्तोत्री। आत्मा स्तुत्यः, स्तुत्यमहिमोपवर्ण्यते। न स्तोत्रीमहिमा। तन्नेयमष्टर्चीं वाचमीश्वरीमाचष्ट इति, परिहृतमेतत् षड्गुरुशिष्येण ‘वगृम्भृणी—अम्भृणस्य महर्षेः पुत्री। अत्मानं तुष्टाव—स्वयमेवर्षिश्च देवताचेत्यर्थः’ इति कात्यायनवचनं व्याचक्षाणेन, येन सप्तविद्याः षड्भ्योऽवाप्ताः। तथा ह्याह॥

विनायकः शूलपाणिर्मुकुन्दः सूर्यो व्यासः शिवयोगीति षड्वै।
नमामि तान् सर्वदा पान्तु मान्ते यैर्वै षड्भिः सप्तविद्यास्तु दत्ताः

आद्या सर्वानुक्रमणी द्वितीया महाव्रतं चोपनिषद्द्वयञ्च।
महाव्रतं सूत्रमासां तृतीया चत्वारिंशत् ब्राह्मणं वै चतुर्थी॥२

सूत्रं पञ्चम्यत्र षष्ठी तु गृह्यं शाकल्यस्य संहिता सप्तमीति।
इमा दत्ताः विद्यास्तु सद्भिः यैः वै षड्भ्यो गुरुभ्यो हि नमोस्तु तेभ्यः’॥ ३॥ इति॥

(यथाकरमिमे श्लोका लिखिताः। लेखकप्रयामादकृत स्याद्वृत्तभङ्ग इति पाठकमहाशयेषु विज्ञाप्यते)। सैषाष्टर्चीं॥

‘अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वदेवैः। अहं मित्रा-वरुणोभा बिमर्मि अहमिन्द्राग्नी अहमश्विनोभा’॥ १॥

प्रसिद्धमहैश्वर्यतत्तद्देवतात्मनाहं वर्ते इति तदर्थः॥

‘अहं सोममाहनसं बिभर्म्यहं त्वष्टारमुत पूषणं भगं। अहं ददामि द्रविणं हविष्मते सुप्राव्ये यजमानाय सुन्वते’॥ २॥ अत्रापि स्तर्पणार्थः। सोमयागेन निकामं तर्पयित्रे यजमानायाहं फलं ददामीत्यर्थः। स्पष्टमन्यत्॥

'अहं राष्ट्री सङ्गमनी वसूनां चिकितुषी प्रथमा यज्ञियानां। तां मा देवा व्यदधुः पुरुत्रा भूरिस्थात्रां भूर्यावेशयन्तीम्' ॥ ३ ॥

अहमीश्वरी कर्मादिफलदात्री साक्षात्कृतपरात्मा यज्ञार्हेषु प्रथमा च एवंरूपां प्रपञ्चात्मना वर्तमानां मामेव तत्तत्कर्तारः कुर्वन्ति। वैश्वरूप्यादित्यर्थः ॥

'मया सो अन्नमत्ति योविपश्यति यः प्राणिति यईं श‍ृणोत्युक्तम्। अमन्तवो मां त उपक्षियन्ति श्रुधि श्रुत श्रद्धिवं ते वदामि' ॥ ४ ॥

अन्तर्यामितया तत्तदिन्द्रियादिशक्तिप्रदात्त्यहमेव। तदिदमजानन्तः क्षीणा भवन्ति। विश्रुत हे सखे-श्रद्धेयमिदं तत्वं वदामि श‍ृणु। इत्यर्थः ॥

'अहमेव स्वयमिदं वदामि जुष्टं देवेभिरुत मानुषेभिः। यं कामये तन्तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम्' ॥ ५ ॥

देवमनुष्यादिसेव्यं परं ब्रह्म मद्रूपं अहमुपदिशामि, मदुपासकं च सर्वेष्टैरनुगृह्णामीत्यर्थः ॥

'अहं रुद्राय धनुरातनोमि ब्रह्मद्विषे शरवे हन्तवा उ। अहं जनाय समदं कृणोम्यहं द्यावापृथिवी आविवेश' ॥ ६ ॥

ब्रह्मद्विषः त्रिपुरासुरस्य वधार्थिनेऽहमेव धनुर्ददामि। उपासकाय युद्धं करोमि, तं रक्षितुमिति यावत्। दिवं च पृथिवीञ्चान्तर्यामितया-विष्टवती चेत्यर्थः ॥

'अहं सुवे पितरमस्य मूर्धन्मम योनिरप्स्वन्तस्तमुद्रे। ततोवि-तिष्ठे भुवना नु विश्वोतामूं द्यां वर्ष्मणोप स्पृशामि' ॥

'द्यौः पिते ति' श्रुतमाकाशं परब्रह्मणो मे मूर्धन्यहमुत्पादये सर्वलयाधारसमुद्रशब्दवाच्यब्रह्मविषयव्यापनस्वभावधीवृत्तिमध्ये भासमानं ब्रह्म औपाधिकशरीराया मे कारणम्। निरूपाधिकं तदेवमेवास्तवं स्वरूपमित्यर्थः। एतन्निबन्धनमेवाहं सर्वं जगत् व्याप्य तिष्ठामित्यर्थः ॥

अहमेव वात इव प्रवाम्यारभमाणा भुवनानि विश्वा । परो दिवा पर एना पृथिव्यैतावती महिना संबभूव ॥ ८ ॥

वायुवदनन्यप्रेरिताहमेवाखिलजगत्स्रष्ट्री । तदेव जगत् विवृत्य द्यावापृथिव्योः परस्ताद्वर्तमानत्वेन । असङ्गोदासीनकूटस्थरूपाया मे एवावती महिमेत्यर्थः । ऋ. वे. अष्ट ७. अध्या. ७. व. ११-१२। अनया चष्टर्च्यावगच्छामस्तात्पर्यलिङ्गानि उपक्रमोपसंहाराभ्यासापूर्वता-फलानि ॥

'यानि पुनर्वचनानि उपक्रमपरामर्शोपसंहारैः क्रियासमभि-व्याहारेण यमर्थमभिदधति, तानि तत्पराणि सन्ति न शक्यानि क्रमेणाप्युपचरितार्थानि कर्तुं' इत्याहुः नयमार्मिकाः श्रीमद्वाचस्पति-मिश्राः शरीरकमीमांसाभाष्यव्याख्यानावसरे ॥

नन्वाभाणकवचनं सत्यमयि स्यात् । वितथमपि स्यात् । यथा यत्किञ्चिल्लौकिकं वचनं, नद्यास्तरि पञ्च फलानि सन्तीत्यादि, तदिह वामदेवबोधं बुध्यन् कश्चित् जीवः कर्मानुगुणस्त्रीत्वभागी वाङ्नामष्टर्ची-प्रतिपाद्यः स्यात । नातो वागैश्वर्यावगमिकैषेति प्राप्नोति । अतोऽनि-श्चितार्थकवचनमूलकमुपादिशन् 'निर्णीतार्थमेव व्याहरेन्न सन्दिग्धार्थक'-मिति प्रामाणिकमर्यादामुपरुन्धीतेति चेत् ॥

'नोपरोधो गतिसामान्यादिति' ब्रूमः ॥

नोपरुणद्ध्येष महाकविः प्रामाणिकमर्यादाम् । यतोऽसन्दिग्ध-मिहपूर्वेण, सत्यमिति । न परेण वितथमिति । कथमिदमवगम्यताम्। गतिसामान्यात् । सर्वदेवतात्मिका वागिति अष्टर्चीसंवित्—नैषा प्रसर्तव्या । यथैषा गच्छति–प्रवर्तते, एवमेवान्य आम्नायो गच्छति-प्रवर्तते, यतो वेदग्रहणेनैव वाचं सर्वदेवतात्मकत्वेन वदतीत्यवग-च्छामः ॥

'यावतीर्वै देवतास्ताः सर्वा वेदविदि ब्राह्मणे वसन्ति तस्मात् ब्राह्मणेभ्यो वेदविद्भ्यो दिवे दिवे नमस्कुर्यान्नाश्लीलं कीर्तयेत् एता एव देवताः प्रीणाति' इति ॥

यतः खलु सर्वदेवतात्मकोवेदोऽत एव वेदसत्वनिबन्धनो देवतासत्ववाद इहेति न किमप्यनिष्टमिह मात्रयाप्युत्प्रेक्षितुं शक्यते। तस्मात्सिद्धम् परमेश्वरी वागिति। इमामेव श्रुतिमनुसरन् वेदं नमस्करोति महाकविः तत्तदध्येतृनिष्ठमिति तत्समानार्थिका महाकविसूक्तिरिति च ॥

पार्वतीति च नित्यतामस्या वाच आचष्टे। सम्बन्धार्थस्तद्धितः। सादृश्यानुयोगित्वं चेह सम्बन्धः। स्थैर्यञ्चेह सादृश्यं। तच्चनित्यतातात्पर्यकमिति ॥

अत्राह—नेदं सम्भवति, स्थैर्यान्नित्यतावगतिरिति, यतः पर्वतादिष्वेवेम्द्रनाश्येषु व्यभिचरतीति। तदसाधकमाख्यान् प्रामाणिकत्वमात्मन उपरुन्ध्यादिति—चेत् ॥

'नोपरोधो गतिसामान्यात्' इति ब्रूमः।

यतो हि यादृशोर्थोऽवगम्यते शब्दात् नासावप्रमाणं सङ्कोच्य इति मीमांसकमर्यादा ॥

तद्यथा—हारियोजनाख्यो ग्रहः सर्वैः भक्षणीयः श्रुतः। भूतभविष्यदादिसर्वव्यक्तिवचन इह सर्वशब्दो नः प्रतिभाति। स चाशक्यसंपादनः इति संकोचकं प्रमाणं गवेषामहे। तेषां नः प्रकरणसंविदुदेति। तेन संकोचितः प्राकरणिकसर्वत्विजो वदति। न पुनः सन्निधिबोध्यैश्चमासिभिः संकोच्यते। ततः सर्वत्विग्भिर्भक्षणीयो न चसिभिरेवेति सिध्यति। यावद्यावत्प्रकरणादिना संकोच्यते तावत्तावच्छ्रुतिर्बाध्यते। असम्भवात्तु संकोचकमपेक्षमाणा सा प्रबलं प्रकरणमुपलभ्य चरितार्था नात्यन्तदुर्बलसन्निधिकृताभिषेणनं सहेतेति ॥

तद्यत्र नापेक्षते संकोचं, न तत्र श्रुतिः दुर्बलप्रमाणकृतसंकोचायात्मानमर्पयेदिति स्थितिः। न चेह पर्वतवत् किमपि संकोचकमुपलभामहे। प्रत्युत श्रुतयः स्मृतयः पुराणादीनि च नित्यत्वाख्यापकानि उपलभामहे। अतो नैषा स्थिरता नित्यत्वं व्यभिचरति। तत् कुतोसावसाधकोपन्यासी? कुतस्तराञ्चात्मनः प्रामाणिकत्वमुपरुन्ध्यात्? असंकोचबोधकन्यायावगतिपूर्वकत्वात् वचनस्येति॥

एतेन—'नैवं सम्भवति, सादृश्यानुयोगित्वं संबन्ध इति। किं कारणम्? यतो नैवं प्रयुञ्जते कवय इति, तत् प्रामाणिकप्रयोगमुपरुन्धीतासौ कवि'रिति अवैदिकतनयाहोपुरुषिका परास्ता। बह्वर्थावगमयितॄणां कवीनामेवं गतिदर्शनात्। इह च पुराणमनुसर्तव्यं, साधकानुग्रहः बोधनीयः, नित्यत्वं अवगमयितव्यं, इत्यनेकार्थकत्वमवगच्छामः। ततः––

'नोपरोधो गतिसामान्यात्'॥

इत्येवेहाप्युत्तरम्। ततश्च वज्रलिप्तमिदं वचनं 'पार्वतीति च नित्यतामस्या वाच आचष्टे' इति। नन्वियता नित्यता परमेश्वरत्वं च वेदस्य सिद्धा। तत एव सर्वेष्टसिद्धिः। कतमेन वार्थेन विशेषणी सम्पृक्तिरर्थवती स्यात्। तदभावे च व्यर्थं विशिंषन्ननवधेयवचनः कविरापद्येतेति अवधेयवचनतामात्मनः सम्प्रतिपन्नामुपरुन्ध्यात् इति चेत्॥

अत्र उपरिप्लवमाना आहुः 'नोपरोधो गतिसामान्यात्' इति वदामः। यथैव ह्येवार्थकेवकारग्रहणतात्पर्यावगमकं वचनं, तथैव सादृश्यार्थकेवकारग्रहणतात्पर्यावगमकमपि। अत्र च पक्षे साधारणं धर्ममपेक्षामहे। तेभ्यो नस्तमेषा समर्पयन्ती विशेषणी सम्पृक्तिरर्थवती। तत्कुतोऽस्य व्यर्थविशिंषत्ता? तदभावे व कुतस्तां अनवधेयवचनतां तदभावे च कुतस्तमां अवधेयवचनत्वमात्मन उपरुन्धीतेति॥

मार्मिकाः पुनः समाचक्षते, 'तमिममर्थं संबद्धाविति आश्रित-पुराणादिमर्यादो विशिंषन्नपि बोधयेत्, उल्लंघितमर्यादो यत्नः किमर्थं' इति पुनरप्याक्षेपनक्रग्रासं परिहरन्तः ॥

'नोपरोधो गतिसामान्यात्' इति ।

एवं ह्यस्य कवेराकूतम्, 'अतिशयितमर्थमवबोधयन्तः प्रामाणिकाः शब्दविशेषाय गच्छन्ति-प्रवर्तन्ते, इह चात्यन्तातिशयितोऽर्थो वागभिधो वेदः' योऽसावर्थरूपोपीति स्थापितः, तत्र गौरश्वः पुरुषो हस्तीत्येवञ्जानीयकानां शब्दानामिव तत्तदर्थैः सह बोध्यबोधकभावात्मा संसर्गः, अपि तु सामानाधिकरण्यात्मा नीलघटादिवत्, यदा पुनर्घटादिशब्दार्थग्राहं वाचोऽर्थं गृह्णीयुः तदा बोध्यबोधकभावात्मैष ससर्गो भायात्, इत्यनेकार्थबुबोधयिषयैवं शब्दविशेषं प्रायुङ्क्तेति, उल्लङ्घितमर्यादस्य मे प्रयोगं विमृश्यावगच्छन्तु प्रतिपित्सव' इति ॥

'सम्बद्धावित्यनुरुद्धमर्यादस्य तु मेप्रयोगं वीक्षमाणाः अवगतशास्त्रकारप्रयोगा बोध्यबोधकभावसंसर्गमात्रनिविष्टबुद्धयो नैतादृशं शास्त्रार्थतत्वं विमृश्य गृह्णीयुरिति' च ॥

मीमांसितः 'पार्वतीपरमेश्वरा'विति 'सम्पृक्ता'विति च विशेषणार्थः, जगतः पितराविति विशेषणार्थमथ मीमांसामहे, किमाकूतकमिदमिति? प्रपञ्चजनकाविति प्रयुञ्जानस्यापि विवक्षितार्थसिद्धिरित्युक्तम् ॥

इहकेचित् शिंशपाचोद्यश्रावमिदं शृण्वन्त उदासते, नैतद्युक्तमिव, प्रयत्नेनाप्यन्विष्यन्तो न चेद्गतिमुपलभेमहि, तर्ह्येनानाश्रयेमहि, इह च नो गवेषमाणानां तावेव वागर्थौ स एव वागर्थः मुहुर्मुहुर्मनोऽधिरोहन्ति ततश्चापवर्गभिन्नाखिलपुरुषेष्टार्थार्थकानि प्रेयांसि, श्रेयश्चापवर्गाख्यमुपतिष्ठन्ते, इह चाखिलप्रेयसां पूगं परमेश्वरशब्द आह, ततश्च

परमेश्वरी वाग्, परमेश्वरोर्थो धर्माख्यः इति तावेतौ निखिलैश्वर्यदाता
विति नैकश्रुतिमुपन्यस्याभिहितम्, श्रेय आख्यश्चापवर्गो नैकश्रुत्या
समधिगतः ससाधनः स्वाध्यायनिरतावायायतत इति पारमर्षादिमश्लो
व्याख्यानावसरेऽभ्यधाय्यृग्विधानवचनान्युदाहरता, तन्नप्रस्मर्तव्यम्,
मिममर्थमाह—'जगतः पितरवि'ति महाकविः, इति प्रतिजानीमहे॥

गमिर्हि नाशार्थो व्यवहारसिद्धः। तद्यथा—अतिकृच्छ्रसञ्चित
दभ्रविभव ऐकागारिकमुष्टतत्सर्वः कन्थामात्रं वसानः काननाभ्य
वर्तनीपार्श्वे एकान्त उपविश्य रुदन् लुठन् देवदत्तः सोरश्शिरस्ता
निन्दंश्च दैवतं पथिकपर्यनुयुक्तः कथयति 'सर्वं धनं गत'मिति,
ततः ताच्छील्ये क्विप् 'आक्वेस्तच्छीलतद्धर्मतत्साधुकारिषु' इति
अर्थविशेष, 'अन्येभ्योपि दृश्यत' इति तत्र क्विपं, सति चास्मि
द्युतिगमिजुहोतीनांद्वे च' इति धातोर्द्वित्वं, षाष्ठिकमभ्यासकार्यञ्चानु
शास्ति यतो भगवान् पाणिनिः, ततो जगत्शब्दो नाशशीलं नाशधर्मा
वार्थं गमयति॥

पतिरिति–रक्षक इत्यर्थकः, 'पातेर्डति'रिति अनुशास्ति य
तदिह नाशशीलस्यापि रक्षकाविति वाक्यार्थः, मन्वाद्यनुशिष्टाः स
अपि हि गतयो नाशशीलिन्यः, याः प्रेयस्सु श्रुतिसमाधिगतेषु निका
मुत्कृष्टतमाः, तथाहि मानवमनुशासनम्॥

त्रिविधा त्रिविधैषा तु विज्ञेया कर्मणो गतिः।
अधमा मध्यमाग्र्या च कर्मविद्याविशेषतः॥ ४१॥
स्थावराः क्रिमिकीटाश्च मत्सयाः सर्पाः सकच्छपाः।
पशवश्च मृगाश्चैव जघन्या तामसी गतिः॥ ४२॥
हस्तिनश्च तुरङ्गाश्च शूद्रा म्लेच्छाश्च गर्हिताः।
सिंहा व्याघ्रा वराहाश्च मध्यमा तामसीगतिः॥ ४३॥

चारणाश्च सुपर्णाश्च पुरुषाश्चैव दाम्भिकाः ।
रक्षांसि च पिशाचाश्च तामसीषूत्तमा गतिः ॥ ४४ ॥
झल्ला मल्ला नटाश्चैव पुरुषाः शस्त्रवृत्तयः ।
द्यूतपानप्रसक्ताश्च जघन्या राजसीगतिः ॥ ४५ ॥
राजानः क्षत्रियाश्चैव राज्ञां चैव पुरोहिताः ।
वादयुद्धप्रधानाश्च मध्यमा राजसी गतिः ॥ ४६ ॥
गन्धर्वा गुह्यका यक्षा विबुधानुचराश्च ये ।
तथैवाप्सरसः सर्वा राजसीषूत्तमा गतिः ॥ ४७ ॥
तापसा यतयो विप्रा ये च वैमानिका गणाः ।
नक्षत्राणि च दैत्याश्च प्रथमा सात्विकी गतिः ॥ ४८ ॥
यज्वान ऋषयो देवा वेदा ज्योतिंषि वत्सराः ।
पितरश्चैव साध्याश्च द्वितीया सात्विकी गतिः ॥ ४९ ॥

'वेदाभिमानितत्तदभिमानिदेवतात्वप्राप्तिः उपासनादिफलं' इति व्याख्यातारः । तदिदं पुराणादिविमर्शिनां सुगमम् ) ॥

ब्रह्मा विश्वसृजो धर्मो महानव्यक्तमेव च ।
उत्तमां सात्विकीमेतां गतिमाहुर्मनीषिणः ॥ ५० ॥

(अत्र धर्मो विग्रहवान्, महानव्यक्तं च साङ्ख्यप्रसिद्धतत्वद्वयम् । तदधिष्ठातृदेवतापरम् ) ॥ इत्यादि ॥

अत्रोपक्रमः 'कर्मणां फलनिर्वृत्तिं शंस नस्तत्वतः पराम् । इति । प्रश्ने, अस्य सर्वस्य शृणुत कर्मयोगस्य निर्णयं । इत्यदिना समाधानपरः ॥

मध्येपि कर्मणो गतिरिति परामर्शः, 'एष सर्वः समुद्दिष्टः त्रिप्रकारस्य कर्मणः । त्रिविधस्त्रिविधः कृत्स्नः संसारः सार्वभौतिकः' इति चोपसहारः । ततश्च कर्मजन्यत्वं गतीनां स्थापितम् । जन्यस्य

तु नाशो न्यायसिद्ध इति । तत्सुष्ठूक्तम् 'सर्वा अपि गतयो॰ शशीलिन्य' इति ॥

तस्यास्य रक्षणञ्च नाशकोपमर्द आयतते इति कः पुनरि॰ नाशकः स्यादिति विचिकित्सा ॥

ननु नैवं विचिकित्सितुमलम्, यतः खलु कर्मनिर्वृत्ता इम॰ गतय इत्यवगतम्, तत एव कर्मनाशान्नश्यन्तीति संप्रतीमः 'क्षी॰ पुण्ये मर्त्यलोकं विशन्ती'त्यादिशास्त्रं पर्यालोचयन्तः ॥

नन्विह मर्त्यलोकं विशन्तीत्यप्यवगतम् ॥

'बहून् वर्षगणान् घोरान्नरकान् प्राप्य दारुणान् ॥
संसारान् प्रतिपद्यन्ते महापातकिनास्त्विमान्' ॥

इत्यादिना च जानं जानं म्रियमाणो मारं मारं च जायमानो॰ तितरां क्लिश्नाति जीव इति चावगतम् । तन्नास्य नाशकं विचिकित्सा॰ उपमर्दाय, अपि तु तस्यास्य घटीयन्त्रवदजस्रमावर्तमानस्य संसा॰ प्रवाहस्य नाशकमेव विचिकित्सामः ॥

'यद्यद्धि कुरुते जन्तुः तत्तत्कामस्य चेष्टितम्' इत्यादि नु शा॰ कर्महेतुं कामं शास्ति । 'कामः सङ्कल्पो विचिकित्सा . . . इत्ये॰ त्सर्वं मन एव' इत्यादिका च श्रुतिर्मनोरूपतामस्याह । तदिहयावन्म॰ स्सत्वं एष प्रवाहोऽविरतः स्यात् इति तन्नाशाय तत्कारणमन्वेषणीयमा॰ पतितम् । आविद्यकपञ्चतन्मात्राण्यस्य कारणान्यवगच्छामोऽन्विष्यन्तः अतोऽविद्यानाशे सर्वमिदमायत इति सिध्यति, तन्नाशश्च विद्यये॰ विद्यया बन्धो विनिवर्त्यते, सच्चिदानन्दरूपश्चात्मावरणभङ्गात् स्वयमे॰ स्वयंज्योतिरास्ते इत्यौपनिषदं निर्णयमवगच्छामः ॥

तदिहाविद्यकतत्तच्छरीरादितादात्म्याध्यासायत्तः तत्तन्नाशा॰ नाशो यस्य यस्य स सर्वः जगच्छब्दवाच्यः पर्यवस्यति । विद्याप्रदाने॰

अविद्यानाशनमेव तद्रक्षणं च पर्यवस्यति । तदिदं सर्वमभिसन्दधानः प्रयुङ्क्ते महाकविः 'जगतः पितरौ' इति, इति नात्र शिंशपाचोद्यसाम्यतावकाश इति स्थितम् ॥

नन्वस्थान एवायं बकबन्धनप्रयासः । यदि मोक्षसाधकौ वागर्थावगमयितव्यौ, स्वायत्तशब्देन कविना साक्षात् 'मोक्षस्य जनकावित्येव प्रयोक्तव्यम् । नैवं प्रयोक्तव्यम्, 'अजन्यो हि मोक्षः, जन्यश्चेत् क्षयी चेति, स्वर्गादेः प्रेयसोऽस्य को विशेषः, तथाच यथा प्रेयांसि दुर्गतिरूपाणि तत्त्वदृशां, तथा श्रेयोऽपि प्राप्नोतीति दौर्गत्यसामान्यापत्तेः ततो वरमुपरोधाश्रयणं' इत्यनुसन्दधानस्य कवेः न दोषः । तदिहैवम्पर्यनुयुञ्जतोऽपि 'नोपरोधो गतिसामान्यात्' इत्येवोत्तरं सिद्धम् । ततश्च प्रामाणिकसम्प्रदायोप्यनुसृतो भवति ॥

अविद्यास्तमयो मोक्षः सा च बन्ध उदाहृतः ।

इति ।

निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः ।

इति च । भागवतं च मतमनुसृतं भवति ॥

अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः ।
ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ॥
तेषामादित्यवत् ज्ञानं प्रकाशयति तत्परम् । इति ॥

ततः सम्प्रदायविदां भगवतश्च प्रवृत्तिभिस्समानेयं कवेः प्रवृत्तिरिति अवश्याश्रयणीयं प्रयोगमुपरुन्धानोऽपि न दूषणार्ह इतीहापि 'नोपरोधो गतिसामान्या' दिति सूत्रमेवोत्तरम् ॥

अत्रोच्यते—यदि संप्रदायोऽनुसर्तव्यः 'मोहस्य नाशका' विति 'अविद्यानाशका' विति वा प्रयुङ्क्तां कविः । यदि वा भग-

वन्मतमनुसर्तव्यम् , 'अज्ञाननाशका' विति प्रयुङ्क्तां । किं कारण-मिमान् प्रयोगानुपरुणद्धि ? इति चेत्—

तत्र वदामः 'नोपरोधो गतिसामान्या' दिति ॥

विदिता गतयोऽनेकास्तच्छीलत्वं च जीवस्य ।
बन्धनमेतत् ज्ञात्वा विरक्त एतेषु मोक्षार्हः ॥ १ ॥

इत्याकूतः कविराड् 'जगतः पितरौ' प्रयुङ्क्त इति विद्यात् ।
श्रुतिरप्येवं प्रववृत इति गतिसाम्यान्न रोद्धैषः ॥ २ ॥

तथाच श्रुतिः परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमाया-न्नास्त्यकृतः कृतेन । (एवं जातनिर्वेदेनाधिकारिणा कर्तव्यमाह) ॥

तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्म-निष्ठम् ॥

(तदनु गुरुणा कर्तव्यमाह) तस्मै सविद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय । येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम् ॥

(प्रोवाच—वदेत्) इति । बहुलं छन्दसीति विधावपि लिट् । दृष्टानुविधिः छन्दसीति वा ॥

नन्वथापि 'जगतो रक्षकौ इत्येव साधु, नान्यत्र रूढं पदं रूढेः प्रच्याव्य गौणतया वा यौगिकतया वा परिणमयितव्यमन्यत्र' रूढिमेव ह्यनुगृह्णन्ति नयविद. आर्येष्वप्रसिद्धार्थकानि म्लेच्छमात्रप्रसिद्धार्थकानि च पिकनेमादीनि पदानि आर्यप्रसिद्धार्थकपदग्राहं गृह्णन्तः, न पुनः शस्त्रक्रियाभिषग्वत् अवयवशो जं विरुज्यावयवार्थं गृह्णन्ति ॥

ततश्च "स्वाधीने शब्दप्रयोगे किमित्यवाचकं पदं प्रयो-क्ष्यामहे" इति महाभाष्यकारादिदृष्टमर्यादामुपरुणध्येवेति चेन्न ॥

"नोपरोधो गतिसामान्यात्" आचार्यत आसादितषट्प्रश्नी-समाधाना अनुशिष्टब्रह्मविद्याः सुकेशःप्रभृतयो महर्षयो ह्याचार्यं पितरमाहुरीति श्रुतिगतिसामान्यात् एवं प्रयुंक्ते कविरिति प्रतीमो यतः ततो नोपरुणद्धीति सिध्यति तथा ह्यत्र श्रुतेरुपसंहारः "तान् होवाचैतावदेवाहमेतत् परं ब्रह्म वेद नातः परमस्तीति तेतमर्चयन्तः त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसीति नमः परम ऋषिभ्यो नमः परमऋषिभ्य इति ॥

तदियतः शास्त्रार्थस्य सूचिकेयं कविसूक्तिः वेदार्थग्राहं वेदाख्यां वाचमपि गृह्णती पारमर्षसूक्तिबोधं स्वाध्यायनिरतिं परमधर्मं बोधयतीति, सुष्ठूक्तं नोपरोधो गतिसामान्यादिति ॥

एतेन—ननु "उच्चैर्गतिर्जगति सिध्यति धर्मतश्चेत् तस्य प्रमा च वचनैः कृतकेतरैश्चेत् ॥

तेषां प्रकाशनदशा च महीसुरैश्चेत् तानन्तरेण निपतेत् क नुमत्प्रणामः" ॥

इत्यादीनि कवयः प्रयुंजते । उच्चैष्ट्वं च गतेः पुरुषचित्तवैचित्र्य आयतते । चित्तवृत्तिवैचित्र्यं च प्राक्तनसंस्कारे, स च तादात्विककर्मणि, सत्येवं यस्य पुरुषधौरेयस्य दीर्घकालनिरन्तरसत्कारासेवितनिवृत्तकर्मजोऽतिशयितः संस्कारः, तस्य मोक्षाख्यगतावेवोच्चैष्ट्वसंप्रत्यय इति पुनरपि तथैव सेवेत ॥

सुखाभ्युदयिकं चैव नैश्रेयसिकमेव च ।
प्रवृत्तं च निवृत्तं च द्विविधं कर्म वैदिकम् ॥ ८८ ॥
इह वामुत्र वा काम्यं प्रवृत्तं कर्म कीर्त्यते ।
निष्कामं ज्ञानपूर्वं तु निवृत्तमुपदिश्यते ॥ ८९ ॥

इत्यादिमानवाद्यनुशासनान्यनुरुंधानः । सेवमानश्च निश्रेयसेन फली स्यात् इत्येतत्पर्यन्तं कवीनामाकूतम् । तथैवेहापि पार-

मैश्वर्यसम्प्रत्ययो निर्दिष्टाधिकारिणो मोक्ष एव भवतीति परमेश्वरत्ववि-शेषण एवयत्ता मोक्षदत्वविधिरिति, अर्थान्तरे भवदभिमते विशिष्ट-मेवेदं जगतः पितराविति विशेषणं व्यर्थं" इति शङ्कापि परास्ता॥

उपानिषदामध्येतैष कविरौपनिषदीं षट्प्रश्नगीतिमनुरुन्धे यतः। अतिनिष्कृष्टा ह्यक्षरात् मोक्षात् क्षरात्मानोऽभ्युदया इति उपानिषदां हृदयम्। विविच्य चाभ्युदयानिश्रेयससाधनानुशासना मानवी भव-दुपन्यस्तास्माकमेवानुकूला न भवतामिति चात्यन्तस्थूलदृशामेवैवञ्जा-तीयक आक्षेपः प्रवर्तेतेति विमर्शशीलिनोऽत्र प्रमाणम् ॥

स्यादेतत् विविच्य निर्देश औपानिदीं गतिं मानवीं च शास-नामनुध्येति। इदन्त्विह किन्निबन्धनं निर्दिष्टं, येह श्रेयस्साधनता

सा प्रथमा, या च खलु प्रेयस्साधनता सा द्वितीयेति? वैप-रीत्यन्तु न्याय्यम्। क्षरफलविरागाधिकारिको ह्यक्षरात्मा मोक्ष इति जगतः पितराविति पदार्थव्याख्यानेनाख्यायि, तद्यदि क्षरफलात्मकानि प्रेयांसि पूर्वमाख्यायेरन्, ततस्तद्विरागतावगतिः सुलभेति। अत एवाहोपनिषत् प्लवाह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म। एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवापियन्ति इति। परीक्ष्य लोकान् कर्म चितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन। तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्। इति चैवञ्जातीयका ॥

किञ्चान्यत्, वेदान्ता इति श्रुतिशिर इति चोपनिषद आख्या-यन्ते श्रेयस्साधनाख्यायिनी श्रुतिर्ग्रन्थान्ते निविष्टेति वा, तदर्थावगति-स्तत्साधनानुष्ठितिर्वा इतरसाधनावगतितदर्थानुष्ठानात् परतः कार्येति वा, अत्युत्कृष्टो हि मोक्षो नाम, तदवगमन्युपनिषादिति सापि मुख्येति श्रुतिशिरश्शब्दवाच्यतास्या इति वा आख्यातारः प्रतियन्तीति प्रतीमः। तदिहैवं प्रयुञ्जानः कविस्तामेतां मर्यादां कथङ्कारं नोपरुन्धीतेति चेत्॥

'नोपरोधो गतिसामान्यात्' इति ब्रूमः। कैमुतिकनयमवगमयन्तो ह्युत्कृष्टं पुरः पश्चात् तदितरत् निर्दिशन्तो भवन्ति। तदिदमिहैव पारमर्षनिर्देशचारुचर्यायां आदित्यहृदयविवृतिप्रघट्टके विचार्यते स्म। तत्सामान्यात् इहापि कैमुतिकनयमनुसरन् प्रथममुत्कृष्टं निर्दिशन् कविः न मर्यादामुपरुन्धीतेति ॥

अथवा 'द्वे विद्ये वेदितव्ये इति ह स्म यत् पुरा ब्रह्मविदो वदन्ति परा चैवापरा च' इत्यादिकामुपनिषदं पश्यामः। इह मोक्षसाधनविद्यानिर्देशात् मोक्षसंम्प्रत्ययः पुरस्तात् तदनु च तदितरसाधनविद्यानिर्देशात्तदितरसम्प्रत्ययः परस्तात्। तामेनामवगच्छन्नेवमाह कविरिति सिद्धं नोपरोधो गतिसामान्यादिति ॥

अथवाऽन्याय्यमेव वैपरीत्यं, अवश्यञ्चैवमेवैतत्प्रयोक्तव्यमिति प्रतिजानीमहे। 'जगतः पितरौ पार्वतीपरमेश्वरा'विति। किं कारणम्? 'गतिसामान्यम्' क्षरफलविरागाधिकारिकतां हि मोक्षस्यावगमयन्त्यस्तास्ता उपनिषदः' यैषा 'प्लवा ह्येते' इत्यादिका, या च 'परीक्ष्य लोकान्' इत्यादिका, याश्चैवञ्जातीयकाः, प्रवृत्ताः। तद्धृदयमर्मविदेवमाह कविः 'जगतः पितरा'विति, न 'मोक्षस्य दायकौ' इति। आयुष्मतैवाक्षेपमुखेऽभ्यधायि 'वैपरीत्यं तु न्याय्यं, क्षरफलविरागाधिकारिको ह्यक्षरात्मा मोक्ष इति जगतः पितराविति पदार्थव्यख्यानेनाख्यायि' इति। तत्कुतस्त्यास्य कवेः श्रौतमर्यादातिक्रमवार्ता इति सिद्धं 'नोपरोधो गतिसामान्यात्' इति ॥

नन्वथाप्येवम्प्रयुञ्जानः कविः कथं समाप्तपुनरात्तत्वदोषात् प्रमुच्येत? अमुच्यमानश्च कथन्तरां अदोषं काव्यं कथयितव्यमिति कवीनां समयं नोपरुन्धीत? उपरुन्धानश्च कथन्तमामवधेयकाव्यो भवेत्कविसमुदायस्य? ॥

अत्र वदन्ति, 'वागर्थाविति न यथाश्रुतं निर्दिदिक्षितम्। एवन्तु निर्दिशामः—'वागर्थाविव सम्पृक्तौ पार्वतीपरमेश्वरौ। जगतः पितरौ वन्दे वागर्थप्रतिपत्तये' इति। नास्त्यत्र समासपुनरात्तत्वदोष इति। तत्रैवं पृष्टास्ते व्याचक्षतां? कथन्नु नामैवं प्रतीथ 'नैवं निर्दिदिक्षितं, एवमेव तु निर्दिदिक्षितं कविनेति'। अन्यदिच्छति अन्यत्करोतीत्यसतामेवायं क्रमः॥

अथवा दुष्टास्ते तुष्यन्तु। इदमिह पुनरपि प्रष्टव्यमवशिष्यते। 'कैमुतिकनयमनुसरता कविनाऽऽख्यायि जगतः पितराविति' इत्यावेदितम्। तन्न प्रस्मर्तव्यम्। तमेव नयमनुसरतां नः सर्वैश्वर्यप्रदतासम्प्रत्ययो भवतीति किमर्थमिदं विशेषणमिति। तत् व्यर्थमेवेदं विशेषणं पार्वतीपरमेश्वराविति॥

अथवा तत्तत्फलगतिमन्तं जीवं वदति जगच्छब्दः। फलप्राप्तिश्चोच्चावचा प्राचीनवासनायामायत्त इति अतिशयितवासनाहितचित्तशुद्धिं जीवं मोक्षप्रदानेन पालयति तदन्यांश्चान्यफलप्रदानेन वाग्वा अर्थो वेति व्यर्थमेवेदं विशेषणं पार्वतीपरमेश्वराविति। तत्कथमेष व्यर्थविशेषणत्वदोषात् प्रच्यवेत? अप्रच्यवमानश्च कथान्तरां अदोषकाव्यकवयितव्यतासमयं कविलोकस्य नोपरुन्धीत? उपरुन्धानश्च कथन्तमां ग्राह्यवचा भवेद्रसिकलोकस्य? इति चेत्

नोपराधो गतिसामान्यात्। यथा हि वैलक्षण्यं बोधयन्तः प्रतिपाद्यानां विलक्षणं प्रयुञ्जते, तथैव सङ्ग्राहकलाघवमप्युपेक्षन्ते। यथा भगवानाह—'इदं ते नातपस्काय नाभक्ताय कदाचन। न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति' इति। यद्यत्र 'तच्चासूयावते क्वचित्' इति प्रायोक्ष्यत भगवान्, तर्हि प्रक्रमभङ्गदोषात् प्रामोक्ष्यत। तत्किं दोष्येव भगवान्? नेति ब्रूमः, विशेषाभिसन्धेः। विशेषं ह्यभिसन्धत्ते भगवानसूयां प्रति, अत्यन्तदुष्टा ह्यसूया नाम, यतस्तपोभक्तिशुश्रूषा

मेधार्जवादिगुणवतोऽप्युपदेश्यतां प्रतिबध्नाति । नात एषाऽतपोवाधम-भक्तिवाधमशुश्रूषावाधं वोपदेश्यतामुपदेश्यस्य बाधेत । अपि त्वातितरां बाधेतेति, स एषोऽर्थो विलक्षणे निर्देश आयतत' इति एवञ्जातीयक-निर्देशनिबन्धनमेवेदृशमर्थं भद्रिकाः प्रजाजानन्त्विति' च ॥

पश्यामश्च सङ्ग्रहकलाघवमुपेक्षमाणान् 'सर्वे ब्राह्मणाः समा-गताः वसिष्ठोप्यागत' इत्यादि प्रयुञ्जानान् । तत्किमेते व्यर्थप्रयोगेण दोषिणः? नेति ब्रूमो विशेषाभिसन्धेः । विशेषं ह्यभिसन्दधते प्रयोक्तारः 'महाप्रभावो वसिष्ठ इतरान् ब्राह्मणानवधीकृत्य । स एष विशेषः पृथङ्निर्देश आयतत इत्येवञ्जातीयकनिर्देशनिबन्धनमेवेदृशमर्थं सर्वे जना जानन्त्विति' । तद्यदि प्रकृतेऽपि कविर्विशेषं नाभिसमधास्यत, व्यर्थं प्रायुङ्क्तेति अदूषयिष्यत । अवोचाम त्वत्यन्तवैलक्षण्यं श्रेय प्रेयसोः श्रुतिस्मृती उदाहरन्तः । तस्मान्नोपरुणध्येवायं कविरदोषकाव्यकवयित-व्यतासमयं कविकुलस्य, यतस्सममेवावगच्छामस्ततश्चेतश्च वैलक्षण्य-मिति । तत्सिद्धं नोपरोधो गतिसामान्यात् इति ॥

स्यादेतत् । वाग्रूपोप्यर्थं स्वाध्यायाख्यः श्रेयःप्रेयःप्रदः स्थापितो ज्योतिष्टोमादिकर्मरूपार्थस्थापं । तदिदमसंबद्धम् । स एष एवं स्थापयन्हि प्रष्टव्यः, कीदृशः पुनरस्य वाक्यस्यार्थ इति । ननु प्रेयोर्थ-मप्यभ्यसितव्यः स्वाध्यायः श्रेयोर्थमपीति, चेत्—हन्त सम्मार्गमपि 'ग्रहं सम्मार्ष्टी'ति विधिप्रमितं ग्रहोद्देशेनाचरन्नेकोद्देशेन च मान्याचारः स्यान्मीमांसकानां, एकत्वमप्येकवचनप्रमितमिति ॥

एवं पञ्चशराववर्तामैन्द्रीमिष्टिमपि 'यस्योभयं हविरार्तिमार्च्छति । ऐन्द्रं पञ्चशरावमोदनं निर्वपेत्' इति विधिप्रमितां हविरार्त्युद्देशेनाचर-न्नुभयार्त्युद्देशेन च मान्याचारः स्यान्मीमांसकानां, उभयवचनेननोभया-र्तिरपि प्रमितेति ॥

अत्यल्पञ्चेदमुच्यते तत्तदुद्देशेनाभ्यसितव्यः स्वाध्याय इति, वागर्थवित्तये ह्यध्येतव्यः स्वाध्याय इति कविराह तादर्थ्ये चतुर्थ्याऽवगमयन्। अनवगमितान्यार्थमाख्यान्कथमभ्रान्तः? कथं वा न बाध्येत! अथ वित्तिमप्युद्दिशाम इति चेत् पुनरपि स एषदोषो दृढीकृतः स्यात्। एकमुद्दिश्यमाप्य शान्ताकांक्षा भावना नान्यदप्युद्दिश्यं गच्छेत् इति नयविदः। तद्यद्यनेकोद्दिश्यिकामध्ययनभावनामाचक्षीत मीमांसकमर्यादामुपरुन्धीतेति ॥

कथङ्कारं पुनरिदमायुष्मता पृष्ठीकृतमिति न विद्मः, यत् स्वाध्यायोऽध्ययनेनाप्य इति स्वाध्यायेन साध्यवती अध्ययनभावना नार्थसंविदार्थवती स्यात् नतरां प्रेयसा, नतमां च श्रेयसेति। अवश्यं चैवमेवैतत्प्रतिपत्तव्यं, येह्यर्थसंविदर्थतामध्ययनस्यास्थिषत, तन्निबन्धनमेव प्रेयोऽर्थतां, तद्वैराग्यनिबन्धनमेव च श्रेयोऽर्थतां, न तेप्यनामुक्तोऽध्ययनेन स्वाध्यायं तथा तथास्थातुमर्हन्ति। आमुवन्तश्चेत् कथमुपजीव्यमुपरुन्धीरन्? ॥

ननु दृष्टमर्थज्ञानं फलं स्यात्, नादृष्टार्थः स्वाध्यायः, इति चेत् न दृष्टार्थता हि लोकतोऽवगतेति अकिञ्चित्कारो विधिरवसीदेत्। अथ नियमयन्न विधिरवसीददिति चेत् न नादृष्टकुक्षिमप्रविश्यैवं वदितुमीशीतेति। असम्भवी च दृष्टार्थसंविदर्थतावादः, येह्यनर्थकाः स्तोभाः गीतयो वा वेदैकदेशाः, न तेषु शक्यं शक्रेणाप्यर्थसंविदर्थतामास्थातुं वृषभात् पयोदोहवत् इति। तदवश्यमदृष्टार्थत्वे युक्तित्रयवतीं स्वाध्यायसाध्यकभावनामेवाशृण्मः। तदिह पुरःफूर्तिरुपजीव्यता व्यापिता च स्वाध्यायमेव भाव्यं साधयन्तीति नयवित्समयः। तमिमं समयमुपरुन्धीतेति चेत् ॥

नोपरोधो गतिसामान्यात्। वेदार्थनिर्णये तद्वाक्येषु वाक्यभेदादिदोषोद्घोषो न लौकिकवाक्येषु, यतोऽनेकान्युद्दिश्यैवं प्रयोक्तारः

प्रयुञ्जते इति । तत्समानमेवैष कविरिति नोपरुणाद्धि समर्थमिति केचित् । वयं तु पश्यामः, तस्यैव वेदस्यार्थमेष कविर्निर्णिनीषत्यनेन-श्लोकात्मना सूत्रेणेति, यथाह भगवान् जैमिनिः "अथातो धर्मजिज्ञासे" त्यनेन सूत्रेण ॥

इह हि वेदाध्ययनानन्तरं तल्लाभहेतुकं तदर्थनिर्णयाय विचारं कर्तव्यं शास्ति, यद्यदृष्टार्थताधीतस्वाध्यायस्य कथमेवमनुशिष्यान्महर्षिः?

विवृण्वन्ति चेममर्थं धर्ममीमांसाभाष्यव्याख्यानावसरे श्रीमद्भट्टपादाः—"सकलस्य तावद्वेदस्य स्वाध्यायोऽध्येतव्य इत्यध्ययनभावना विधीयते । (अध्ययनं कर्तव्यतया विधीयते इत्यर्थः) तत्र किं भावयेदित्यपेक्षायां अध्ययनमित्यागतमपि पुरुषप्रवर्तनाशक्तियुक्तेन विधायकेन अपुरुषार्थसाध्यायां भावनायां प्रवर्तनाशक्तिप्रसक्तेः तदंशान्निराक्रियते । (नाध्ययनं सुखं सुखसाधनं वा, नातस्तत्र पुरुषः प्रवर्तयितुं शक्यते, ततश्च विधेः प्रवर्तकत्वं न स्यात्, अतोध्ययनं न साध्यतयान्वेतीत्यर्थः) ततश्चाविरोधात् सन्निधेश्च करणांशे निविशते । (ततश्च प्रवर्तकत्वश्रवणान्यथानुपपत्त्या यत्किंचित् पुरुषाभिलषितंस्यादिति भाव्याकाङ्क्षायां शमितायां साधनाकांक्षायां च सत्यां साधनत्वेनाध्ययनं भावनायामन्वेति, उपस्थितत्वात् साध्यत्वावगताविव साधनत्वावगतौ विरोधाभावाच्चेत्यर्थः) तेन किमित्यपेक्षिते यच्छक्यते इत्युपबन्धात् अक्षरग्रहणमित्यापतति (सामान्यतोवगतमिष्टं उपस्थिततत्तदर्थप्रणालिकया निर्धारयति तेन 'किमित्यादिना' 'एवं सर्वविधीनां प्राक् पुरुषार्थलाभादपर्यवसानं' इत्यन्तेन) तस्याप्यपुरुषार्थत्वात् तेन किमिति (अपेक्षिते सतीति शेषः) पदावधारणमित्युपातिष्ठते'. तेनापि (अपेक्षिते) पदार्थज्ञानं, (इत्युपतिष्ठते इति शेषः) तेन (अपेक्षिते-उपतिष्ठते इत्युत्तरत्र सर्वत्र समानं ज्ञेयम्) वाक्यार्थज्ञानं, तेन चानुष्ठान, अनुष्ठानेन स्वर्गादिफलप्राप्तिरित्येतावति प्राप्ते निराकांक्षीभवति । एवं सर्वविधीनां प्राक्पुरुषार्थला-

भादपर्यवमानम् । (यत्पुनरुक्तं नियमादृष्टकल्पनं अर्थसंविद्भ्रात्यत्वपक्षेऽपि समानमिति आदावेवाक्षरग्रहणं भाव्यं निर्दिश्यादृष्टार्थत्वं कल्पयाम इति तान् प्रत्याचक्षते) न च सहसैव विधिदर्शनात् स्वर्गाद्येव फलं कल्प्यते। योग्यतया हि यस्य यत्रानन्तरभाविनि व्यापारो लक्ष्यते तदेव तस्य कार्यमित्यवधार्यते । तत्र यदि तावत् तदनुसारेणैव कियत्यप्यध्वनि फलमासाद्यते ततो नान्तरा कल्पनमर्हति, पारंपर्यप्रयोजनेनापि श्रुतविध्युपपत्त्या अन्यथानुपपत्तिलक्षणार्थापत्त्यनुत्पादात् । (तत्किं न क्वचिदप्यदृष्टकल्पना? नेत्याह—) यत्रत्वनन्तरं दृष्टं कार्यं न स्वयं पुरुषार्थो नापि पारंपर्येण तमाप्नोति—यथाहोमस्या हवनीयप्राप्तिः भस्मसाद्भावो वा, तत्र तदतिक्रमेण साक्षात्कर्मण एवादृष्टकल्पना । सर्वत्र चैतत् लक्षयितव्यम्'. इति ॥

(एतदिति सर्वनाम्ना 'तत्तद्वाक्यप्रमेयार्थयोग्यतामनुरुध्य तत्प्रमेयार्थानां अव्यवहितस्वव्यापारेण साध्योर्थः प्रयोजनं ग्रहीतव्यम् । साध्योऽर्थोऽपुरुषार्थश्चेत्—तद्योग्यतानुरोधितव्यापारसाध्योऽर्थः प्रयोजनं ग्रहीतव्यम् । एवं यावत्पुरुषार्थप्राप्तिः परम्परया गन्तव्यम् । एवं बहुदूरपर्यालोचनमपि वाक्यप्रमाणमिति शब्दप्रमाणेनैव पुरुषार्थो लब्धः। जाग्रति चैवञ्जातीयके प्रमाणे कथन्तदभावः प्रथेत? अप्रथमाने चैतस्मिन् कथन्तरामर्थापत्तिं कल्पयितारो लभेरन्? अलब्धप्रमाणका एवादृष्टार्थं प्रमेयमर्थं वदन्तः कथन्तमां श्रद्धेयवाचो भवेयुः प्रमाणजीवातूनाम्?' इति पूर्वोक्तमर्थं परामृशति । सर्वत्र लक्षयितव्यमिति—अध्ययनविधिरिह निदर्शनार्थं उपात्तः । न तन्मात्रेऽयं न्यायः। अपि तु यत्र यत्रार्थापयितुं प्रवर्तेत तत्र तत्रायं न्यायोऽनुसन्धेय इत्यर्थः ॥

इदमत्र भट्टपादानामाकूतम् 'ब्राह्मणेन निष्कारणं षडङ्गो वेदोऽध्येतव्य इत्यस्त्याम्नायः । तमनुरुध्याधीती व्युत्पन्न इति पदार्थान्वाक्या-

र्थान्वा लौकिकपदार्थवाक्यार्थवेदं विद्यात्। नैतावतानुष्ठानायेशीत सन्दिग्धपदार्थवाक्यप्रत्ययः। अथेमं सन्देहमपकुर्वाणो मीमांसेत तत्रैव खल्वेतन्निर्णय आयतत इति। अथ चैतदात्तसम्प्रत्ययो यावत्पुरुषार्थलाभमन्वेषेतेति'॥

यो यः पुनरत्र तं तं पुरुषार्थं लम्भयति, तत्तन्धर्ममाचक्षते। यथाह भगवान् भाष्यकारः 'श्रेयस्करो धर्म' इति श्रेयस्करभाष्य। विवृतं चैतत् श्रीमद्भट्टपादैः—

'श्रेयो हि पुरुषप्रीतिः सा द्रव्यगुणकर्मभिः।
चोदना लक्षणैर्ग्राह्या तस्मात्तेष्वेव धर्मता'॥ इति।
'श्रेयस्साधनता ह्येषां नित्यं वेदात् प्रतीयते।
ताद्रूप्येण च धर्मत्वं तस्मान्नेन्द्रियगोचरः॥

इति च द्रव्याद्यात्मत्वे लौकिकप्रमाणागम्यत्वाय तदिदमखिलश्रेयोदृष्ट्या॥

श्रेयोदृष्ट्या त्वाहुः श्रीमद्भट्टपादाः—
सर्वत्रैव हि विज्ञानं संस्कारत्वेन गम्यते।
पराङ्गश्चात्मविज्ञानादन्यत्रेत्यवधारणात्॥ इति

विवृतं चेदं तैरेव। आत्मज्ञानं हि संयोगपृथक्त्वात् क्रत्वर्थपुरुषार्थत्वेन ज्ञायते। तेन विना परलोकफलेषु कर्मसु प्रवृत्त्यसंभवात्। तथा य आत्मापहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः। तथा मन्तव्यो बोद्धव्यः तथा अस्मानमुपासीतेति कामवादलोकवादवचनविशेषैः, जिज्ञासामननसहितात्मज्ञानकेवलावबोधपर्यन्तस्पष्टात्मतत्त्वज्ञानविधानापेक्षितवाक्यान्तरोपात्तद्विविधाभ्युदयनिश्रेयसरूपफलसम्बन्धः, स सर्वांश्च लोकानाप्नोति सर्वांश्च कामानाप्नोति, तरति शोकमात्मवित्, स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति तेन

पितृलोकेन सम्पन्नो महीयते, इत्यादिना योगजन्याणिमाद्यष्टगुणैश्वर्य-फलानि वर्णितानि । तथा स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभि-सम्पद्यते न स पुनरावर्तते न स पुनरावर्तते इत्यपुनरावर्त्यात्मकपरमात्म-प्राप्त्यवस्थाफलवचनम्' इति ॥

अयमर्थः— कर्तृत्वभोक्तृत्वपरलोकसम्बन्धित्वान्यात्मनोऽप्रमिमाणो-नपारलौकिककर्मसु विहितेषु निषिद्धेषु प्रवर्तेत निवर्तेत वेति तादृग्विध-मात्मज्ञानं तत्रोपयुज्यते । यत्पुनरपहतपाप्मत्वादिगुणाष्टकवत आत्मनो ज्ञानं, यच्च बोधात्मकस्य सगुणस्यैव ज्ञानं, तदुभयं आर्थवादिकसर्व-लोकावाप्त्यादिना फलवत् । नहीदं द्वयं पुरुषे कर्मणि वा कञ्चित् दृष्ट-मर्थमाधत्ते, येन तादर्थ्यमवसीयेत । न चास्ति श्रुत्यादीनामन्यतमं प्रमाणमिह, येन बलात्कारिताङ्गत्वमिदं द्वयमदृष्टार्थमवसीयेत ॥

यत्पुनस्तृतीयमात्मज्ञानं 'आत्मानमुपासीतेति' निर्गुणविषयबोधप-र्यन्तापरोक्षसाक्षात्काररूपं, तदपि यावदायुषं ब्रह्मलोकमभिसंपद्यते न स पुनरावर्तते इति वाक्यशेषासादितापुनरावृत्त्यात्मकपरमात्मप्राप्त्यवस्था-रूपमोक्षेण फलवत् । अपुनरावृत्त्या जन्यत्वं निषिद्धमवस्थायाः । तद्यदि लोक इह भोगभूमिः स्यात् । तर्हि तत्प्राप्तेः जन्यत्वं ध्रुवं स्यात् । ततो निषेधश्रुतिरपार्थापद्येत, नैतद्युक्तं, अत आनन्दास्वादहेतुत्वगुणात् स्वरूपरूपात् लोकशब्दार्थो गौणः । ततो ब्रह्मैव लोक इति कर्मधारयः । तादृगात्मप्राप्तिः शरीरसंबन्धोपाधिककर्तृत्वभोक्तृत्वात्मकसंसाररूपावस्था-परित्यागेन अकर्तृभोक्त्रात्मकासंसारिरूपनिजावस्थात्मिका । नैषावस्था जन्या, उपाधिर्नष्टः, नाशोपलक्षितः आत्मा शुद्धः, तमिममाह—पर-मात्मप्राप्त्यवस्थेति । नातो मोक्षस्य जन्यत्वं विनाशित्वं वा प्रसज्ये-तेति' । तदिह महाकविसम्मताखिलैश्वर्याख्यप्रेयोदः स्वाध्यायः मोक्षा-ख्यश्रेयोदश्चेति स्फुटितम् ॥

ननु सूत्रकारगत्या समाना कविगतिरित्युपक्षिप्तम् मीमांसक-

समयानुरोधाय वार्तिकार्थस्तु प्रदर्शितः । नैतेनापि विवक्षितार्थमाप्नुमः, यतो न पर्यहार्युद्देश्यानेकतेति, प्रत्युत तानि तान्युद्देश्यानि प्रदर्शयन्तो भट्टपादाः अस्मत्पक्ष एव स्युरिति चेत्——न ॥

अपरामर्शात्, करणांशपाति अध्ययनं भाव्यांशपाती वेद इति किल प्रथमतस्त आहुः, तावता श्रुतं वेदस्य कर्मत्वरूपं अङ्गीकृतमेव। लोकतः पूर्वप्रवृत्तिमिह वेदस्य मन्यन्ते । नातो लोकावगतार्थबोधकतापातः । येनाज्ञातार्थज्ञापकतानिबन्धनं वेदप्रामाण्यंहीयेत ॥

न च पश्चादपि अक्षरावाप्तिर्लोकावगम्या अध्यनेनेति तद्धीयेतैवेति शङ्कयम् । पार्यन्तिकी यादृशतादृशपुरुषार्थतासंवित् यद्यदर्थस्य भवति तत्तत्पुरुषार्थसाधनतया स्वाध्यायं विशिंष्यात् । नैवञ्जातीयकावगतिर्लौकिकीति उद्देश्यपरंपरां प्रदर्शयन्ति भट्टपादाः । निर्धून्वते च व्यसानितयार्थापत्तिं । तदनेन जगतः पितराविति पार्वतीपरमेश्वराविति च प्रथमतोऽध्ययनकर्मत्वेन वागर्थाविति शब्दनिर्दिष्टं स्वाध्यायं विशिंषतः कवेरभिप्रायः प्रकटितः । परंपरया चापुरुषार्थलाभं पर्यालोचयतः पुरुषस्य अर्थसंवित् प्रथमभाविनीति प्रथमतोऽर्थसंविदं 'वागर्थप्रतिपत्तय' इति प्रयुञ्जानस्य कवेरभिप्रायः 'पदार्थज्ञान'मिति वदद्भिः भट्टपादैः प्रकाशितः । येचेमेऽनेके पदार्था भान्ति न ते शाब्द्यां भावनायां (शब्दगम्याकृतिरूपायां) भाव्यतयानुयन्ति । अपि तु श्रुतकर्मत्वःस्वाध्याय एव - नात उद्देश्यानेकत्वकृतवाक्यभेदस्य प्रसक्तिः । इति परंपरां बोधयन्तो भट्टपादाः न कविवाक्यार्थे वाक्यभेदगन्धोपीत्याविष्कुर्वन्ति ॥

नन्वथापि विशिष्टोद्देश्यता स्वीकृता । तदिदं न्यायविरुद्धं । क्रियान्वये हि कारकत्वसिद्धिरायतते क्रियानिर्वर्तकं कारकं नामेति । क्रिया च भावना । तद्यदि वागर्थशब्दबोध्यस्वाध्यायेन कर्मकारकेण कर्मकारकान्तरभूतः प्रेयःश्रेयःप्रदरूपोर्थः 'जगतः पितरौ पार्वतीपरमेश्वराविति' पदबोध्योन्वियात् । कारकत्वमात्मनो जह्यात् ॥

अथ पृथक् तस्यामेव भावनायां कारकत्वसिद्धयेऽन्वियात्। स्यादपि कारकत्वसिद्धिः न पुनरन्वयावकाशः। भाव्यं किंचिदुपलभ्य शान्ताकांक्षा हि सेति। अथ भावनान्तरमन्वययोग्यं काल्प्येत, नैष दोषः, परन्तु वाक्यभेदो महान् दोषः, इति चेत ॥

न भावानवबोधात्। भट्टपादा हि करणांशमध्ययनं निर्णीय भाव्याकांक्षायां यच्छक्यते तद्भाव्यमित्युपबन्धं कर्तव्यत्वेनाहुः स्वाध्यायं भाव्यं पश्यन्त एव। नैतद्विशेषणविधयाथान्तरस्य स्वाध्यायेऽन्वयाभिप्रायेण। अपि तु तात्पर्यतः स्वाध्यायशब्द एवैवंविशिष्टार्थबोधक इत्यभिप्रायेण। ततश्च पुरुषार्थपर्यवसाय्यर्थज्ञानादिकारणभूतस्वाध्याय एव तात्पर्येणोद्देश्यभूतोऽध्ययनभावनायां। तात्पर्यविषयीभूतश्चार्थः प्रेयश्रेयोरूप इति बोधयितुं कविना विशेषणविधयैतद्द्वयं व्यवहृतमिति भट्टपादानामाभिसन्धिः। नातो विशिष्टोद्देशनिबन्धनोऽपि दोष इति सिद्धम्। व्रीहीन् प्रोक्षतीति विहितं प्रोक्षणं तात्पर्यतः अपूर्वसाधनीभूतव्रीह्युद्देशेनैवेति अंगीकुर्वतां यथा न विशिष्टोद्देशदोषः तद्वत् ॥

यच्छक्यते तद्भाव्यमित्युपबन्धस्याधीयन् न स्तोभाक्षरेषु गीतिषु वा अदृष्टकल्पनायेष्टे। गीतिकालपारिपूर्तिः ऋगक्षरविश्लिष्टिर्वा तत्र फलं शक्यं वक्तुमिति। ततश्च वार्तिककारविवृतार्थकमहर्षिसूक्त्या समानार्थावगतिका कविसूक्तिरिति नोपरुणद्धि मीमांसकमर्यादामिति सिद्धम् ॥

नन्वेतावता प्रबन्धेन धर्मब्रह्मनिर्णयाय विचारशास्त्रं प्रणीतं महर्षिणेत्यास्थितं भवति। विचारद्वारा तदुभयाप्तिसाधनीभूतस्वाध्यायाभ्यासः कार्य इति कविहृदयमप्युद्घाटितं भवति ॥

नन्वेतद्युक्तमिव। ब्रह्मनिर्णायका न्यायाः न जैमिनिना ग्रथिता इति। जैमिनिनयविरुद्धाः नया द्वैपायनेन ग्रथिता इति च। अतो नात्मनिर्णयाय धर्ममीमांसा प्रवर्णिता। किन्तु ब्रह्ममीमांसान्यैवेति सिध्यति। स्पष्टीकृतं चेदं वार्तिककारैः—

इत्याह नास्तिक्यनिराकरिष्णु-
रात्मास्तितां भाष्यकृदत्र युक्त्या ।
दृढत्वमेतद्विषयश्च बोधः
प्रयाति वेदान्तनिषेवणेन ॥

इति आत्मनिर्णयो न धर्ममीमांसातः । अपि तु वेदान्तमीमांसात इति व्याचक्षाणैः । ततश्च यदिह ज्ञानेन मोक्षप्राप्तिमाहुर्वार्तिककाराः तत्प्रासङ्गिकं, विज्ञानं संस्कारकं पुरुषस्येति प्रवृत्तं असंस्कारकमपि मोक्षफलं विज्ञानमस्तीति प्रसङ्गेनोक्तेः । तस्मात् अध्ययनभावनायां साध्यस्य स्वाध्यायस्य श्रेयःप्रदत्वतात्पर्यवर्णनं कथमिव संघटेत? । अपि च सन्ति तात्पर्यविषयीभूतानि फलानि अत्यन्तविलक्षणानि । तत्रात्यन्तवैराग्यादिमदधिकारिकमोक्षस्यापि निवेशो न कथमपि दोषमावहति । तत् पृथक् निर्देशो वैलक्षण्यबोधक इत्यपि मन्दप्रयोजनोक्तिः इति चेत्—

परिहृतमेतत् कविनेति ब्रूमः । यदा हि वैलक्षण्यस्फोरणा मन्दप्रयोजना, तदा भट्टपादोपदिष्टात्मावस्थाख्यमोक्षगतिमतां, मानवादिशासनासिद्धाखिलफलगतिमतां चाविशेषात् रक्षकौ इति जगतः पितराविति अनेन बोधयत्येव कविरिति वक्तव्यम् । इह चासम्पादितस्य रक्षणवचनं शशविषाणायेतेति तास्ता गतीः सम्पादयतो रक्षतश्चेत्याकूतम् । ततश्चाकिञ्चित्करोयं वादः 'पार्वतीपरमेश्वराविति' ॥

ननु नित्यत्वावगमन इति किञ्चित्कर एवायं वाद इति आत्मनैवोचि । तत्कथं प्रस्मरति भवान्? सत्यमूचि, न परमेतद्वाद एवायतते नित्यतासंविदिति ब्रूमः, यावता जगतः पितराविति वादेपि आयतमानामिमां संविदमवगच्छामः । तथाहि फलगतयः कार्याः अनादयः नादिमन्तौ वागर्थाविमाः सम्पादयितुं वा परिरक्षितुं वेशाते इति अनादित्वे हेत्वभावाच्चानश्वरत्वं, नित्यत्वसिद्धिः इति ॥

ननु कार्या गतय इत्युच्यते अनादयश्चेति । तत्किं नेदं कालात्ययापदिष्टम्? यथा—

मृगतृष्णाम्भसि स्नातः खपुष्पकृतशेखरः ।
एष वन्ध्यासुतो याति शशशृङ्गधनुर्धरः ॥

इति यत्किञ्चेदं भ्रान्तं वचनम् । इति चेत्—

परिहृतमेतत् अमलानन्दश्रीचरणैः भामतीनिबन्धनव्याख्यानावसरे ॥

तदाकृत्युपरक्तानां व्यक्तीनामेकया विना ।
अनादिकालावृत्तिर्या सा कार्यानादिता मता ॥

इति वदद्भिः । प्रवाहनित्यत्वमितीतः स्फुटितम् । ततश्च प्रकृते नैव मोक्षेण सहान्याः फलगतीर्गृह्णीरन् रसिकाः । अपि तु भिन्नेनैव वाक्येन तास्ताः फलगतीः प्रमिमितां नाम प्रमातारः इति कविहृदयम् । सैषा द्वयी वचनव्यक्तिः—

जगतः पितरौ सम्पृक्तौ वागर्थाविव वागर्थप्रतिपत्तये वन्दे इति.

पार्वतीपरमेश्वरौ सम्पृक्तौ वागर्थाविव वागर्थप्रतिपत्तये वन्दे इति च ॥

तत्तदृगादिरूपवेदाभ्यासमात्र आयतन्ते कामक्रोधलोभमोहमदमात्सर्यादीनां ज्ञानप्रतिबन्धकानामपगमा वा शमदमोपरतितितिक्षाश्रद्धासमाधानादीनि ज्ञानसाधनानि वा तदनु ज्ञानेन मोक्षो वेति तादृशवाग्रूपार्थलाभाय तादृक्षा वाचोऽभ्यस्यामि' इति वागनुसारिण्यर्थसंवित्॥

मोक्षसाधनीमात्मावगतिं ब्रह्ममीमांसायत्तामनुरुध्य उपनिषदं वेदमभ्यस्यामि विचारयामि चेति द्वैपायनहृदयमनुरुध्य, अर्थानुसारिण्यर्थसंवित् । अवगतः प्रथमवचनव्यक्त्यर्थः ॥

एवं तदभ्यास आयत्ताः अखिलैश्वर्यगतय इति तादृग्वाचोऽभ्यस्यामि, तादृशवाग्रूपार्थलाभाय, इति वागनुसारिण्यर्थसंवित् ॥

अखिलैश्वर्यसाधनीं धर्मावगतिं धर्ममीमांसायत्तामनुरुध्य वेदान्तस्य विचारयामि इति जैमिनिहृदयमनुरुध्य, अर्थानुसारिण्यर्थसंवित्। स एष द्वितीयवचनव्यक्त्यर्थः ॥

ननु सम्पृक्तौ वागर्थावेव वागर्थप्रतिपत्तये वन्द इति सकृच्छ्रुतम्। तत्कुतस्त्या द्वितीयवचनव्यक्तिः? अनुषङ्गादिति कवेरभिसन्धिः। या ते अग्नेऽयाशया तनूर्वर्षिष्ठा गह्वरेष्ठोग्रंवचो अपावधीं त्वेषं वचो अपावधीं स्वाहा। इति वचनानन्तरं श्रुतयोः या ते अग्ने रजाशया या ते अग्ने हराशया, इति वाक्ययोः पूर्वः शेषोऽनुषज्यते यथा, यथा वा ऋताषाट् ऋतधामाग्निर्गन्धर्वः तस्यौषधयोऽप्सरस ऊर्जो, नाम स इदं ब्रह्म क्षत्रं पातु ता इदं ब्रह्म क्षत्रं पान्तु तस्मै स्वाहा ताभ्यः स्वाहा इति वचनानन्तरं श्रुतेषु संहितोविश्वसामा सूर्यो गन्धर्वः तस्य मरीचयोऽप्सरसः आयुवः, सुषुम्नः सूर्यरश्मिश्चन्द्रमा गन्धर्वस्तस्य नक्षत्राण्यप्सरसः बेकुरयः, भुज्युः सुपर्णो यज्ञो गन्धर्वस्तस्य दक्षिणा अप्सरसस्तवाः, इत्याद्यनेकवाक्येषु नाम स इदमित्यादि शेषोऽनुषज्यते, तथेति भावः ॥

नन्वेवं द्वयीं वचनव्यक्तिमाश्रयतः कवेः कोऽभिसन्धिः? प्रमाणप्रवृत्तिवैलक्षण्यं, प्रमेयस्वरूपवैलक्षण्यं चाभिसन्धायैवमाहेति वदामः। स्वर्गकामो यजेतेत्येवमादीति हि धर्मप्रमाणानि पुरुषं नियुञ्जन्ति सन्ति यागादीन् धर्मानवगमयन्ति। नैवमात्मा ज्ञातव्य इत्यादीनि ब्रह्मप्रमाणानि नियुञ्जन्ति सन्ति बोधयन्ति, अपि तु बोधयन्त्येव केवलं ॥

ननु तदेव कुत? तदुच्यते—धर्मप्रमाणं धर्मचोदना, प्रेरणेति यावत्। सा च प्रवृत्तिजनकव्यापाररूपा ततश्च प्रवृत्तिर्जन्या। सा च ज्ञानवदिच्छावच्च यद्यपि विषयवती, अथापि न तदुभयवत्सिद्धवस्तुविषया अपि तु साध्यवस्तुविषया। तदियता चोदनाजन्यप्रवृत्त्या

यागादिविषयाः साध्या इति सिद्धम् । न च पुरुषार्थसाधनेऽर्थे पुरुषः प्रवर्तयितुं शक्यत इति पुरुषार्थोपायत्वमप्यस्याक्षिप्य बोधयन्ती तद्द्वारेणेच्छां तत्रोत्पाद्य पुरुषं प्रवर्तयति । आत्मचोदना तु सिद्धात्म-विषयिणीति विषये साध्यताधीर्निवर्तते । निवर्तमाना च साधिकांप्रवृत्ति-मपिनिवर्तयति । अत उपपन्नमवबोधयन्त्येव केवलमिति ॥

अत्रोच्यते—चोदनेहज्ञातव्यइत्यादिका अध्येतव्यइत्यादिवत् भाति, नैषापलपितुं शक्या, यदीह विषयप्रवृत्तिजनकतास्याः दुर्घटा. तर्हि ज्ञानमेव चोदनातोऽस्तु, दुर्हाणाखल्वेषा चोदनाधीस्तव्यप्रत्य-याद्यवगमितेति । तत्रैवं वृष्टो भवान् व्याचष्टाम्—तत्किं ज्ञानं साक्षात्काररूपे पुरुषो नियुज्यते ? उताहो उपासनायां ? अथ वा शाब्दबोधे ? । नाद्यः, ब्रह्मरूपमेवेदंज्ञानं, ततो नित्यमकार्यं चेति। न द्वितीयः, उपासनाहि नाम विजातीयप्रत्ययरहितसजातीयप्रत्यय-धारा लोकतोऽवगता, सा च ज्ञानं प्रकर्षयतीति अन्वयतो व्यतिरेक-तश्चावगतेति । न तृतीयः—निष्कारणं षडङ्गवेदाध्ययनशास्त्रानुसारि-णोऽवगतदपदार्थस्यानुशिष्टशाब्दन्यायमर्यादस्य ज्ञानोत्पत्तेरवर्जनीयत्वात्. नातः तुर्योपि प्रकारः सम्भाव्यते, येन विधिविषयत्वं प्रसाध्येत ॥

किञ्चान्यत्—यदीयं चोदना ज्ञानविधिपरा, तर्ह्यात्मतत्वं केन निश्चीयेत, यत्पराः ये भवन्ति त एव हितेषामर्थाः, तत आत्मतत्व-निश्चयः न शाब्दः स्यात् ॥

ननु यथा विशिष्टविधौ सति विशेषणविधिरर्थात् इति मीमां-सका वदन्ति, उदाहरन्ति च 'एतस्यैवं रेवतीषु वारवन्तीयम-ग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेतेति ' विशिष्टयागविधानं रेवत्याधारवारवन्तीयसामरूपविशेषणविधिं, तथेह विशिष्टज्ञानाविधौ विशेषणब्रह्मनिश्चयः कुतो न स्यात ? इति चेत्-न ॥

यत्र हि बोध्यवैशिष्ट्यं सत्यं, स्यादपि तत्रार्थात् विशेषणस्य प्रमा, यत्र पुनर्न सत्यं न तत्रैवं प्रमा, न च विशिष्टबोधविधौ विशेषणेन सत्येनैव भाव्यमिति नियन्तुं शक्यं, मनो ब्रह्मोपासीतेत्यादिविधावारोप्यस्यापि धीविषयत्वावगमात् । तस्मात् फुटमेव प्रमाणप्रवृत्तिवैलक्षण्यम् । एतेनैवप्रमेयस्वरूपवैलक्षण्यमपि साध्यत्वसिद्धस्वरूपं स्फुटीकृतं भवति । यतोऽवबोधानन्तरं प्रवृत्तिसाध्यो धर्मः, परत्र तु शाब्दंज्ञानमेवाभ्यसनीयामिति । तत्सिद्धं वैलक्षण्याभिसन्धिमता कविना वाक्यद्वयं प्रयुक्तमिति ॥

नन्वथाप्यादौ धर्मं विजिज्ञास्यानुष्ठाय मृदितकषायो ब्रह्मविचारयितु मवधतुमपरोक्षतया साक्षात्कर्तुं च प्रभवेदिति तदानन्तर्यरूपः क्रमोऽतुरोद्धव्यः । दर्शयतश्चैवं प्रत्यक्षानुमाने । 'गृही भूत्वा वनी भवेत् वनी भूत्वा प्रव्रजेदिति,' प्रत्यक्षम् ॥

अधीत्य विधिवद्वेदान् पुत्रांश्चोत्पाद्य धर्मतः ।
इष्ट्वा च शक्तितो यज्ञैः मनो मोक्षे निवेशयेत्' ॥ इति ।
'अनधीत्य द्विजो वेदाननुत्पाद्य तथात्मजान् ।
आनिष्ट्वा चैव यज्ञैश्च मोक्षमिच्छन् व्रजत्यध' ॥ इति च ।

अवश्यं चैवमेवैतत्प्रतिपत्तव्यम् उपजीव्यत्वात् पूर्वतन्त्रस्य । तथाह्यप्रमाणस्या विचार्यत्वापत्त्या तत्सिद्धये प्रमाणलक्षणं, विद्याभेदादिसिद्धये शब्दान्तरादिभेदकप्रमाणपरभेदलक्षणं, तत्तदधिकणीयनिर्णयसिद्धये श्रुतिलिङ्गादिबोधकशेषलक्षणं, अर्चिरादिपर्ववियदादिसृष्टिक्रमसिद्धये क्रमलक्षणं, तदेव रूपं यदमुष्य रूपमित्याद्यति देशसिद्धये चातिदेशलक्षणे, उपजीव्यते । तदिहादौ ब्रह्मविचारावबोधनपरां वचनव्यक्तिं प्रयुञ्जानः कविः तानीमानि सर्वाण्युपरुणद्धीति चेत् ॥

नोपराधो गति सामान्यात् इति ब्रूमः । 'यदि वा इतरथा ब्रह्मचर्यादेव प्रव्रजेत् । गृहाद्वा वनाद्वेति' अविचारितानुष्ठितधर्मणोपि

ब्रह्मविचारं यथावगमयति श्रुतिः । तत्समानमेव कविरप्यवगमयतीति नोपरुणद्धीति ब्रूमः । युक्तंचैतत्, कथमन्यथा 'यदहरेव विरजेत् तदहरेव प्रव्रजेदिति' श्रुत्युपपत्तिः । ततश्च वैराग्यजनिरेव प्रव्रज्य ब्रह्मविचार कारणमुक्तं भवति । यः पुनरविरागः तद्विषयमेव दर्शित-प्रत्यक्षानुमाने । नचोपजीव्यं पूर्वतन्त्रं, यावतोत्तरमन्त्रे त इमेर्थाः सूत्र्यन्ते । 'अत एव च नित्यत्व'मिति वेदप्रामाण्यं, 'नानाशब्दादि-भेदात्' इति भेदकप्रमाणानि, 'शब्दादेव प्रमित' 'आकाशस्तल्लि-ङ्गात्' इत्यादौ श्रुतिलिङ्गादीनि, 'श्रुत्यादिबलीयस्त्वाच्च' इत्यादौ तद्बलाबलं, 'विपर्ययेण तु क्रमः' इत्यादौ चापेक्षितक्रमप्रमाणजातं, 'अतिदे-शाच्च' इति चातिदेशः, एवमन्यदप्युदाहार्यमिति च कवेरभिप्रायः ॥

सूचनमेवहि तत्तदर्थानां पूर्वतन्त्रेपि कृतं यथोत्तरतन्त्रे । भाष्य-कारादिभिः स्फुटीकर्तव्यता तु सर्वत्र समानेति नैकः पर्यनुयोज्यः। ये पुनर्वृत्तिकारादिभिर्व्याख्येया अर्थास्सूचितास्सूत्रेणेति सौत्रा भवन्ति तेषां सर्वात्मना ग्राह्यतामाहुर्भट्टपादाः ॥

सूत्रेष्वेव हि तत्सर्वं यद्वृत्तौ यच्च वार्तिके ।
सूत्रं योनिरिहार्थानां सर्वं सूत्रे प्रतिष्ठितम् ॥

इति एतेनेयमपि शङ्का परास्ता यैषैवमुद्भाव्यते 'ननु ब्रह्मविचारो वैराग्य आयतत इत्युक्तं तन्न प्रस्मर्तव्यम् । तदेव तु वैराग्यमननुष्ठितः कर्मणः कथं सिध्यतीति विमर्ष्टव्यं भवति ॥

दर्शयतश्चैवं प्रत्यक्षानुमाने 'तमेतं वेदानुवचनेन ब्राह्मणाविवि-दिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' 'जायमानो वै ब्राह्मणः त्रिभिः ऋषणवा जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः' इत्यादिप्रत्यक्षम्, 'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्' 'ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्' महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः' इत्यादिचानुमानम् । कर्माणि हि दोषमनक

जनिसञ्चितपापात्मकमपाकुर्वन्ति सन्ति संस्कुर्वन्ति पुरुषं, यन्निबन्धन-मेषां संस्कारतावादः 'यस्यैतेऽष्टाचत्वारिंशत्संस्कारा' इति प्रत्यक्षानु,मानतात्पर्यम् । नचानिर्णीतकर्मा अनुष्ठानायेष्टे, नवाऽपरिशीलितधर्म-जिज्ञासो निर्णयाय, अतोवश्यमादौ धर्मो जिज्ञास्य इति स्फुटं प्रतीमः । तदिहेमां धर्मजिज्ञासामादावनिर्दिशन्नुपरुणद्धीमे प्रत्यक्षानुमाने वैराग्य-ञ्चेति ॥

नैतदेवं यतः यथोक्ता श्रुतिरानतर्यं बोधयति ब्रह्मविचारस्य-तत्समानमेवान्या 'ब्रह्मचर्यादेव प्रव्रजेत्' इत्येवंविधा प्राथम्य-मपि अवगमयतीति तन्मूलं प्राथम्यं निर्दिशन् कविर्ब्रह्मविचारस्य कथ-मुपरुन्ध्यादिति । जन्मान्तरानुष्ठितकर्माभिरेवेहजन्मनि चित्तशुद्धिः सम्भ-वेत् । तन्नेहजन्मन्यवश्यमनुष्ठेयानि कर्माणि विशुद्धसत्वेनेति विशुद्ध-सत्वाभिप्रायकं श्रुतिवचनं कविवचनञ्चेति, अविशुद्धसत्वपुरुषाभिप्रायकं चोपदर्शितप्रत्यक्षानुमानादिवचनं चेति, सिद्धं नोपरोधो गतिसामा-न्यादिति ॥

अतश्चाधिकारिभेदादपि न कर्मणा सह वा ब्रह्मज्ञानाभ्यासः, तदभ्यासात् पूर्वं वा कर्मानुष्ठानं विशुद्धसत्वस्य सम्भवतीत्यप्युक्तं भवति॥

एवं हीह श्रुत्यभिसन्धि कविवरगमयति—दीर्घकालनैरन्तर्य-सत्कारैरनुष्ठीयमानो हि आत्मज्ञानाभ्यासः मोक्षाभिधाय तत्साक्षात्कारा-येष्ट इति स्थितिः 'ज्ञात्वा तं मृत्युमत्येति नान्यः पन्था विमुक्तये' इत्यादिश्रुतिप्रमाणिका नैतस्याभ्यासस्य कर्मसाहित्यावगमिका 'यज्ञेन विविदिषन्ती' त्यादिका श्रुतिः । प्रधानं हि फलसाधनाय प्रवृत्तं उप-कुर्वन्ति सहभावीन्यङ्गानि भवन्ति, यथा आग्नेयादीन् समिदादयो यागाः । फलं चोत्पाद्याप्यविकार्यसंस्कार्याणां अन्यतमं स्यात्, यथा संयवनेन पिण्डः, दोहनेन पयः, अवघातेन व्रीहयः प्रोक्षणादिना व्रीहयो वा ॥

न चेह फलात्मा मोक्ष उत्पाद्यो ज्ञानाभ्यासेन, घटादिषु जडेषु हि इन्द्रियेण साक्षात्कारो जन्यते, आत्मनि तु चिदात्मके नेन्द्रियादिना साक्षात्कारः संभवति स्वयंप्रकाशत्वात् नित्यत्वाच्चात्मनः तत्स्वरूपत्वाच्च तत्साक्षात्कारस्य, अविकार्यत्वात् अनवयवत्वाच्च न विकार्यसंस्कार्याप्यताः संभवन्ति ॥

अतोऽवश्यं आवरणात्यय एव फलं वक्तव्यम्, आवरणञ्चाज्ञानं नैकविधजगद्रूपेण परिणतम्, तच्चात्मानमावृणोतीत्यात्मविषयं आत्मविषयेणैवान्तःकरणवृत्तिविशेषेणासन्दिग्धवेदान्तवाक्यार्थभावनापरिपाकजेन अज्ञानापवाधात्मना बाध्यते, स्वपरविरोधिपदार्थवत् स्वयं च नश्यति, यथाहुः 'पयः पयोऽन्तरं जरयति स्वयं च जीर्यति, इत्येवं स्वपरविरोधिनो भावा यथोपलभ्यन्ते तथा आत्मसाक्षात्कारोपि अन्तःकरणवृत्तिविशेषः स्वपरविरोधीति नाश्यमानपदार्थैः सह स्वयमपि नश्यतीति' ॥

ननु शुद्ध आत्मा न विषयः स्यात्, उपहितस्य विषयत्वे शुद्धात्मसाक्षात्काराभावः, शुद्धात्मविषयकं चाज्ञानं तथाविधेनैव ज्ञानेन साक्षात्कारात्मना निवर्तेत न भिन्नविषयेणेति चेत्—न, वृत्तिसंसर्गे आत्मनो विषयत्वं न स्वत इत्यङ्गीकारात्, नन्वथापि वृत्तेः विशेषणत्वे स्वस्य स्वभास्यत्वप्रसङ्गः, शुद्धसाक्षात्कारासंभवश्च, उपलक्षणत्वे च अविद्यमानैवैषोपलक्षणमिति शुद्धात्मन एव विषत्वापातः, न च शुद्धं ब्रह्म विषयः स्यात्, इति चेत् ॥

न विशेषणत्वोपलक्षणत्वप्रकरद्वयभिन्नोयं प्रकार इत्यङ्गीकारात्, वृत्तिमङ्गीकुर्वतां नोपलक्षणतादोषप्रसक्तिः, नैषा स्वभास्येत्यङ्गीकुर्वताञ्च न विशेषणताप्रयुक्तदोषप्रसक्तिः, स्पष्टश्चेदं कार्यानन्वयी सत्वानियतश्चेति प्रकारान्तरं वाक्यान्वयाधिकरणे, ततश्च यज्ञेन विविदिषन्तीति न कर्मसाहित्यावगमिकेति सिद्धम् ॥

नापि ब्रह्मविचारात् पूर्वं नियमेनानुष्ठानबोधिका कर्मणां, कर्माधिकाराभावात् । अध्ययनविध्यधीनाध्ययनो हि प्राक्तनसत्कर्मसंस्कारवान् आभासवैराग्यो वृद्धेभ्यः श्रुतात्मतत्वोऽवगततद्भिन्नाखिलमिथ्यात्वश्च तत्तकर्माणि तत्तत्साधककारकाणि तत्तत्फलानि चातात्विकानि निर्णयंस्तदन्वात्मनोऽकर्तृभोक्तृत्वमवगच्छन् ज्ञानदार्ढ्यं प्राप्तुकामः वृद्धेभ्यः एव निर्णयसाधनतया ब्रह्ममीमांसामुपश्रुत्य तत्र प्रवर्तते। अपगतकर्तृत्वभोक्तृज्ञानः स एषः कथं नामाधिकृतः स्यात्? यथा राजत्ववैश्यत्वज्ञानरहितः राजसूये वैश्यस्तोमे वा, अथ समर्थोऽस्मीत्यतीत्यापि तदभिमानं तावनुतिष्ठतः कथन्तरां फलाय कल्पेयातां तौ । तथा प्रवर्तमानश्च ब्रह्ममीमांसोपकृतादात्मतत्वावबोधकोपनिषद्वाक्यनिकायात जातनिर्णयो ज्ञान एव रमेत न प्रापञ्चिकव्यवहारे ॥

ततश्चेयमपि शङ्का परास्ता 'ननु निर्णीतवेदान्तवाक्यार्थज्ञानमभ्यस्यतो वैराग्यसम्पत्तिः तया च तादृशनिर्णयाय प्रवृत्तिरिति परस्पराश्रयतापत्तिः' इति । प्राक्तनसंस्कारेण आभासवैराग्यस्य वृद्धवाक्यैः किंचिद्दृढस्य स्वतो वेदान्ताभ्यासेन ततोप्यधिकस्य विचारेण चाकम्प्यस्य, चोपपत्तेः तदनुगुणानेकजिज्ञासायाश्चोपपत्तेः । तदेतदाहुर्धर्ममीमांसाप्रस्तावे न्यायरत्नमालायां श्रीमत्पार्थसारथिमिश्राः ॥

जिज्ञासैकोपनीतस्य द्वितीया पठितश्रुतेः ।
ज्ञातवेदाङ्गकस्यान्या या मीमांसा पुरस्सरा ॥ इति ॥

ननु ज्ञाततत्वोऽज्ञाततत्वपुरुषकारं करोति भोजनाद्यखिलव्यवहारं, नैष कर्माधिकारीति वदन् भवान् कथं विश्वास्यवचा भवेद्वैदिकानां, इति चेत्—

तत्र वदामः—सत्यं व्यवहरति बलवदविद्यासंस्कारानुवृत्त्या, अथापि मिथ्यात्वप्रत्ययस्य दृढतया न क्वचिदपि श्रद्धधीत । तद्यथा पित्तदूषितजिह्वः इक्षुक्षीरगुडमधूनि तिक्ततयास्वाद्य थूत्कृत्य त्यजन्नपि

नैषां तिक्ततायां श्रद्दधीत तद्वत् । अश्रद्धयानुतिष्ठतश्च गतिमाह भगवान्—

अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् ।
असदुच्यते पार्थ न च तत् प्रेत्य नो इह ॥ इति ॥

यतश्च खलु श्राद्धोधिकारी विहितकर्मस्विति शास्ति शास्त्रं, ततो मन्यामहे दृष्टार्थानि कर्माणि कुरुतां नाम समर्थः, लभतां च फलं नादृष्टार्थेषु प्रवर्तमानः शास्त्रैकसमधिगम्येषु कर्मसु फलाय कल्पेतेति ॥

न चैवं शास्त्रमात्रावगम्यनिषिद्धवर्जनेपि अनधिकार आपतेत् ततश्चानुष्ठायी न प्रत्यवेयादिति वाच्यम्, प्रसक्तमात्राधिकारिका हि निषेधा इति नयविदः ॥

तत्कथं 'विविदिषन्ति यज्ञेन' इत्यादिश्रत्युपपत्तिः यावता सह वा पुरो वा कर्मानुष्ठानावश्यकता परास्तेति चेत्—तत्र ब्रूमः—यज्ञादिना इच्छन्ति ज्ञातुम् । इति हि तदर्थः, इच्छोत्पत्ताविमानि कारणानीत्युक्तं भवति न ज्ञानोत्पत्तौ, कर्मभिः पक्वे कषाये ज्ञानेच्छा, तदनु ज्ञानोपाये प्रवृत्तिरिति निर्गलितोर्थः ॥

ननु विषयसौन्दर्याधीना इच्छा न प्रयत्नसाध्येति चेन्न—अदभ्रभोगसम्पत्तिमतोन्नद्वेषिणो भिषजं प्रति भोजनेच्छाकरीं भैषज्यरीतिमुपदिशेति प्रार्थयमानान् तदुपदिष्टानार्थाननुतिष्ठतश्च यतो बहुलमुपलभामहे इति ॥

ततश्च जन्मान्तरे इच्छार्थमनुष्ठितकर्मणः पुरुषस्येहजन्मनि जातेच्छस्य कर्मानर्हस्य ब्रह्मविचारः सुलभ इति सर्वश्रुतिसामरस्यम् । 'यदहरेव विरजेत् तदहरेव प्रव्रजेदि' ति श्रुत्युपपत्तिश्चेति कविहृदयमिति सिद्धम् ॥

नन्विह स्वाध्यायाध्ययनमुपनीताधिकारिकं शक्यार्थफलकमुक्तं । तत्र विमर्ष्टव्यं भवति । उपनीता ह्यनेकप्रकाराः । केचिदधीत्य धर्मं

जिज्ञास्य स्नास्यन्तीत्युपकुर्वाणाः। अपरे त्वामृतिब्रह्मचारितया गुरुकुल एवावतिष्ठन्त इति नैष्ठिकाः। अपरे त्वधिस्वाध्यायाध्ययनं अधिविचारं वोत्पन्नवैराग्या इति अननुष्ठितकर्माणः। तत्राद्यानां विषये गृहस्थानुष्ठेय-कर्मज्ञानफलकत्वं तत्प्रतिपादकभागस्य, भागान्तरं तु पापक्षयाद्यर्थपारा-यणाद्युपयुक्तं। द्वितीयानां विषये च तदीयकर्मभिन्नगृहस्थाद्यधिकारिक-कर्मावबोधकभागस्यापि पारायणाद्यर्थत्वम्। तृतीयाधिकारिविषये तु यावद्वैराग्योत्पत्ति तदनुष्ठेयकर्मावबोधाद्यर्थकत्वं तत्तद्भागस्य। ततः परं सर्वथाऽनधिकारस्तत्र। शमादिमोक्षसाधकाविद्यानाशकमन्त्रजपादौ तत्वनिर्णायकब्रह्ममीमांसायां चाधिकारः इत्युक्तो भवति। न चैवमुप-पद्यते अननुगमात्। इति चेत्—

न दर्शपूर्णमासवदुपपत्तेः। सन्नयदधिकारिका, असन्नयदधि-कारिका च दर्शपूर्णमासेष्टिः। तत्र सन्नयतः श्रुताः षट् यागाः नित्याः काम्याश्च। 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति श्रुतेः। असन्नयतस्तु (असोमयाजिन इत्यर्थः) दधिपयोयागद्वयस्थाने ऐन्द्राग्नः पुरोडाश एक एव 'असन्नयत एन्द्राग्नः' इति विहितः। ततश्च यागद्वयमेव। एवं पूर्णमासेऽपि यायद्वयमेव, 'नासोमयाजिनो ब्राह्मणस्याग्नीषोमीयः पुरोडाशो विद्यते' इति अग्नी-षोमीयपुरोडाशस्य निषेधात्। ततश्च यो योऽधिकृतो यद्यत्कर्मार्हः तत्त-त्कर्म जीवननिमित्तकं स सोऽनुतिष्ठेत् इति यथैकवाक्यकल्पनया वैरूप्य-दोषं परिहरन्ति। एवं तत्तत्फलायेतिकाम्यवाक्येपि परिहरन्ति। तथैवा-ध्ययनविधावपि 'यो योधिकृतो यद्यदर्थेन अक्षरावाप्त्या अर्थज्ञानेन वा फली स स तत्तच्छक्त्यार्थायाधीयीत' इति विधिवाक्यार्थपर्यवसानात्॥

तस्मान्नकोऽपि दोषं कविराट्सूक्तौ कथमपि निर्देष्टुम्।
वर्षशतेनापीष्टे चिन्तामणिवद्विभाति यैषा नः॥ १॥
अतिगम्भीराप्येषा प्रसादसुमुखी चकास्ति सूत्रात्मा।

क्वेयं कविराट्सूक्तिः क्वाहं मन्दो विवरणकृतयत्नः ॥ २ ॥
ध्यायं ध्यायं कविराट्सूक्तिमणिं तं च कविराजम् ।
निश्चेष्टमास्थितं मामाविश्यैवं विलिखति कविराजः ॥ ३ ॥
तन्नद्वयेन शोधितनिगमवचस्सारसङ्ग्राहिन् ।
अयि कालिदास वैदिकमूर्धन्यैवं सदैव सान्निध्यम् ॥ ४ ॥
कुर्वन्नुपकुरु मन्दे ध्यातरि सम्प्राप्तकर्तव्ये ।
वेदे यतस्तु भक्तिश्शिव इव मे स्यात्तवेव सर्वार्था ॥ ५ ॥
अथवा कांस्कानर्थांश्चिन्तामणिवद्ददाति तव सूक्तिः ।
आविर्भवन्पुरस्तान्दयया शाधि प्रपद्यमानं त्वाम् ॥ ६ ॥
नैव तु शरणं प्राप्तं समुपेक्षन्ते कदापि साधुजनाः ॥
सरसैः काव्यैः श्रुत्याद्यर्थं शास्तः कथमसि साधुर्नो ॥ ७ ॥

तदिह महर्षिरामं कवी रमते स्वाध्याय इति तपस्स्वाध्यायनिरतिधर्मतावगमकं काव्यमिति नोपरोधो गतिसामान्यात् इति सिद्धम्॥

अथ सावित्रोपासनपरमधर्मतावगमकं काव्यमिदं भवति न वेति जिज्ञासा ॥

ननु रावणेन साकं युध्यतश्रीरामचन्द्रस्य श्रान्तस्यानुष्ठितागमस्त्योपदिष्टसावित्रोपासनस्य च शत्रुजयः पारमर्षकाव्यात्प्रमितः, नैवमितः काव्यात् प्रमिमीमहे, यत आह कविः ॥

अयश्शङ्कुचितां रक्षः शतघ्नीमथ शत्रवे ।
हृतां वैवस्वतस्येव कूटशाल्मलिमाक्षिपत् ॥ ९५ ॥
राघवो रथमप्राप्तां तामाशाञ्च सुरद्विषां ।
अर्धचन्द्रमुखैर्बाणैश्चिच्छेद कदलीसुखम् ॥ ९६ ॥
अमोघं सन्दधे चास्मै धनुष्येकधनुर्धरः ।
ब्राह्ममस्त्रं प्रियाशोकशल्यनिष्कर्षणौषधम् ॥ ९७ ॥
तद्व्योम्नि शतधा भिन्नं ददृशे दीप्तिमन्मुखम् ।

वपुर्महोरगस्येव करालफणमण्डलम् ॥ ९८ ॥
तेनमन्त्रप्रयुक्तेन निमेषार्धादपातयत् ।
स रावणशिरःपङ्क्तिमज्ञातव्रणवेदनाम् ॥ ९९ ॥
बालार्कप्रतिमेवाप्सु वीचिभिन्ना पतिष्यतः ।
रराज रक्षःकायस्य कण्ठच्छेदपरम्परा ॥ १०० ॥
मरुतां पश्यतां तस्य शिरांसि पतितान्यपि ।
मनो नातिविशश्वास पुनःसन्धानशङ्किनाम् ॥ १०१ ॥
अथ मदगुरुपक्षैर्लोकपालाद्विपाना
मनुगतमलिबृन्दैर्गण्डभित्तीर्विहाय ।
उपनतमणिबन्धे मूर्ध्नि पौलस्त्यशास्त्रोः
सुरभिसुरविमुक्तं पुष्पवर्षं पपात ॥ १०२ ॥ इति ॥

तत्रेदं काव्यं सावित्रोपासनापरमधर्मतावगमकमिति—चेन्न—त्वरा-निर्देशात् ॥

अतित्वरयादावेवैतत्परमधर्मतामवगमितवान् कविरिति वदामः ॥

'वैवस्वतो मनुर्नाम माननीयो मनीषिणाम् ।
आसीन्महीक्षितामाद्यः प्रणवश्छन्दसामिव' ॥

इति यत एवाहेति ॥

'खेदयः किरणाः गावः रश्मयोऽभीशवो दीधितयः गभस्तयो वनं उस्राः वसवो मरीचिपाः मयूखाः सप्तर्षयः साध्याः सुपर्णा इति पञ्चदश रश्मिनामानि' इति निरुक्ते वसुशब्दः किरणवाचकः समधिगतः । विविधकिरणवान् सविता विवस्वान् । बहुलं छन्दसीति मतुपो मकारलोपः । स एव शब्दो लोकेपि प्रयुज्यते ॥

अथवा स्वकिरणैः तेजोन्तराणां आच्छादकः, विवस्ते आच्छादयतीति व्युत्पत्तेः । तत्सम्बन्धी मनुः, वैवस्वतो मनुः, सावित्रमन्त्रः गायत्रीरूपः । यत एवं निर्दिशन् कविः 'पूजयस्व विवस्वन्तं भास्करं

भुवनेश्वरं इति पारमर्षे आदित्यहृदये दृष्टिं क्षिपति, तदनु च यस्य इदं विस्तृतमुपासनमित्युक्तं तस्य परमेश्वरस्य, तदनु तन्मन्त्रस्य गायत्री-रूपस्य चावबोधने । रश्मिमन्तमिति च सुवर्णसदृशकिरणविशेषबोधकः, नातः 'रश्मिमन्तं समुद्यन्तं देवासुरनमस्कृतमि'ति किरणवैशिष्ट्य-बोधकपदेन पौनरुक्त्यं पारमर्षवचने उद्भावनीयम् ॥

किं पुनर्वसुगतं वैविध्यं ? कानि चास्य कार्याणि ? न तदिह प्रतन्यते मरीचिचारुचर्चायां अस्मादीयायामनुपदमेव प्रकाशयिष्य-माणायां अवगन्तव्यं इति ॥

मनीषिणां विदुषां । कीदृशविद्यावन्तः ? उपदिष्टगायत्री-रूपविद्यावन्तः । 'स हि विद्यातस्तं जनयतीति' अनुशिष्टगायत्रीमन्त्र त्रैवर्णिकं यत आपस्तंबो विद्वांमभिसन्धत्ते । माननीयः मान पूजायां, मान विचार, इति धातुद्वयनिष्पन्नः । मन्त्रस्य सानियमजप एव पूजा। तदर्थश्च पारमर्षवचनैर्विचार्यः, तत उपासनीयश्चेति तन्त्रेण निर्देशे कवेरभिसन्धिः । नामेति प्रसिद्धिमाह । आसीदिति अनादिकाल-दारभ्यैवमभूदिति पुराकल्पप्रदर्शनेन शिष्टसम्प्रदायसिद्धोयं मार्ग इती-दानीन्तनैरवश्यमनुष्ठेय इति दर्शयति । अनीयरा प्रत्ययेनावश्यकत्व-मपि दर्शयति ॥

ततश्चायं वाक्यार्थः—यतोऽनादिकालादारभ्य सर्वे शिष्टाः उपनयनादारभ्य गायत्रीं जपन्तस्तदर्थं विचार्योपासीना वा मन्त्रावगता-खिलेष्टभाजोऽभवन्, तदिदानींतनैरपि तथैवाचारितव्यमिति, आवश्य-कतावगमनेनप्रत्यवायसूचनात् आलस्यादिनेमं मन्त्रं यथाकालं अजपन् प्रत्यवेयादिति, च ॥

एवञ्च 'वैवस्वतो मनुर्मनीषिणां माननीय आसीन्नाम' इत्येकं वाक्यम्, 'वैवस्वतो मनुर्महीक्षितां आद्यो माननीय आसीन्नाम' इत्यपरम्, अत्र महीं क्षयन्तीति महीक्षितः, 'आक्केस्तच्छीले'ति

ताच्छील्ये क्विप्, 'अन्येभ्योपि दृश्यत' इति चोक्तम्, 'इरज्यति पत्यते क्षयति राजति इति चत्वार ऐश्वर्यकर्माण' इति निरुक्तम्, ततश्च भूमीश्वरत्वेच्छूनां मनुरेष आद्यो माननीयः, कण्टकशोधनेन चेश्वरत्वं, तत्कण्टकशोधनायादावुपास्य इति प्रकृतानुगुण्यम् ॥

ततश्चायं वाक्यार्थः—यतोऽनादिकालादारभ्य निष्कण्टकं भुवं शासितुं कण्टकशोधनाय प्रवर्तमानाः आदाविमं मनुमुपास्येश्वरा जाता अत इदानींतनैरपि कण्टकशोधनाय प्रवर्तमानैरादाववश्यमुपास्य एष मनुरिति ॥

तत्र दृष्टान्तः—'छन्दसामिव' इति । 'देवा वै मृत्योर्बिभ्यतस्त्रयीं विद्यां प्राविशन् ते छन्दोभिः अच्छादयन् यदेभिरच्छादयन् तच्छन्दसां छन्दस्त्वं' इत्यादि श्रुतौ करणे प्रत्ययवत् कर्तरि असु प्रत्ययः । तथाच छादनकर्तार इत्यर्थः । तेन ब्रह्मस्वरूपेण निखिलं जगत् आच्छादयितारो यतयो बोध्यन्ते ॥

तथाचोपनिषत्—

ईशावास्यमिदं सर्वं यत्किञ्च जगत्यां जगत् ।
तेन त्यक्तेन भुञ्जीथा मा गृधः कस्य स्विद्धनम् ॥ इति ॥

इह सर्वसङ्गपरित्यागेन आत्मस्वरूपाधिगमरूपात्मपरिपालनाय सर्वस्य जगतः परमेश्वरस्वरूपेणाच्छादनस्यावश्यकर्तव्यतां यतः शास्ति । ते च सन्न्यासिनः प्रणवमहावाक्योपदेशेन विद्यावन्त इति विदुषः । ततश्च मनीषिणः ॥

तथाचायं वाक्यार्थः—'मनीषिणां छन्दसां प्रणवो यथा माननीय आसीन्नाम तद्वत्' इति । इह च केवलप्रणवस्य सनियमो जपः माननं–पूजनं, तदर्थं विचार्य ऐक्यानुसन्धानं च पूजनं सन्न्यासिनां अनुष्ठेयो धर्मः उक्तः ॥

प्रणवे हि अकार उकारो मकारश्चेति वर्णा वर्तन्ते, येषां क्रमेण विश्वतैजसप्राज्ञाः विराड्ढिरण्यगर्भाव्याकृता बोध्या अर्थाः । ओमित्येकीकारेणोच्चार्यमाणस्य प्रणवस्य उपाधिपरित्यागेन शुद्धचैतन्यैक्यमर्थः । तदनुसन्धानं सन्न्यासिनो धर्मः । तथा चोपनिषत् । 'अमात्रश्चतुर्थोऽव्यवहार्यः प्रपञ्चोपशमः शान्तः शिवेऽद्वैत एवमोंकार आत्मैव संविशत्यात्मनात्मानं य एवं वेद' इति । बहुप्रपञ्चनीयोऽयमर्थो माण्डूक्योपनिषदादाववगन्तव्यो विस्तरभयान्नेह प्रतन्यते ॥

सएषोऽर्थो दृष्टान्ततयोपात्तोऽपि विधाने तात्पर्यवान् । चमत्कारी कविर्दृष्टान्ततयोपादात् । यतोऽनादिकालादारभ्य सन्न्यासिन एवं अकुर्वन्नत इदानींतनैरपि तथाकार्यमिति अर्थे पर्यवसानात् ॥

किञ्चान्यत्—सन्ति सप्त भूमयः—शुभेच्छा, विचारणा, तनुमानसा, सत्त्वापत्तिः, असंसक्तिः, पदार्थाभावनी तुर्यगा इति । तत्र वासशीलाः महीक्षितः । क्षिनिवास इति धातोरुत्पन्नत्वात् । ता इमाः योगभूमयः सन्न्यासिनां प्रणवोपासनयेव तद्भिन्नानां सावित्रोपासनया लभ्या इति उभयमध्यनिर्देशः 'महीक्षितामाद्यः' इति । ता इमा महावासिष्ठरामायणादिभ्योऽवगन्तव्या विस्तरभयाद्विरम्यते ॥

नामेति प्रसिद्धिर्द्योतितेति कथितम् । क्व पुनरेवं प्रसिद्धं यदनुसन्धत्ते कविः? तदुच्यते—जातसंस्कृतौ इति । 'जातं वात्सप्रेणाभिमृशति' इत्याह भगवानापस्तम्बः । कः पदार्थः? वात्सप्र इति! तदाह—'दिवस्परीत्येषोऽनुवाकः' इति । तद्दिवस्परीत्यनुवाकेन जातं पुत्रं पिताभिमृशेदिति वाक्यार्थः ॥

इह चैषा मीमांसकमर्यादानुसन्धेया—कर्मणि विनियुक्तो मन्त्रः कर्मावगमयेत्, तदभावे कर्मसमवायिनमर्थं, तदभावे कर्मफलं, तदभावे कथमपि कर्मसम्बन्धः परिकल्पयितव्यः, तस्याप्यसम्भवेऽदृष्टार्थता, न पुनर्द्रागेव अदृष्टार्थता कल्पनीयेति ॥

इह चैकादशमन्त्राः वात्सप्रशब्दग्राह्याः। तत्रादिमं मन्त्रद्वयं क्रियासम्बद्धं व्याख्यास्याम उदाहृत्य॥

'दिवस्परि प्रथमं जज्ञे अग्निरस्मद्द्वितीयं परि जातवेदाः।

तृतीयमप्सु नृमणा अजस्रमिन्धान एनं जरते स्वाधीः' इति प्रथमः॥

(उपासकानां विषये सौमनस्येन अग्रं उच्चैःपदं नेता यः परमेश्वरः दिवःपृष्ठे सूर्यरूपेण प्रथमं, अस्मदुपयोगाय जातवेदोरूपेण द्वितीयं, वडबानलादिरूपेणाप्सु च तृतीयं, अभिव्यक्तवान् प्रादुर्भूतवान्, एनं परमेश्वरमजस्रमुपासीन एवायं बालः वयोहानिं गच्छेत्। आमरणमेनं परमेश्वरं उपासीतैवेत्यर्थः। किन्तत्फलं यदुपासनया लभ्येत उद्दिशता वा अनुद्दिशता वा? तदाह स्वाधीरिति। धियो लभेतैष बाल एतदुपासनया। ता एता धियः पुनः न नूत्ना उत्पाद्यन्ते अपि तु स्वकीया एवेति विशेषणार्थः। एनमिन्धानः (अस्य सन्तोषवर्धकः इति तात्पर्यं पूर्वमग्नित्वेनोक्तपरमेश्वरस्य दीपनबोधकशब्देन विवक्षितम्) अजस्रं जरते तेन च स्वाधीः स्यात् इति सम्बन्धः)॥

अनेन गायत्रीमन्त्रफलप्रदर्शनेन यतिभिरनुसन्धेयोङ्कारफलाखण्डसाक्षात्कारप्रदर्शनेन च तदनुगुणतत्तद्वर्णाश्रमादिधर्मैः परमेश्वरप्रीणनं तत्तद्वर्णाश्रमादिं प्राप्नुवन्नयं बालः अवश्यं कुर्यात् इति प्रतिज्ञातं भवति, यतो वयोहानिर्मरणमेवाननुष्ठानकारणमित्याह॥

अथ द्वितीयः 'विद्मा ते अग्ने त्रेधा त्रयाणि विद्मा ते सद्म विभृतं पुरुत्रा॥

विद्माते नाम परमं गुहा यत् विद्मा तमुत्सं यत आजगन्थ' इति॥

(हे परमेश्वर अग्रनेतः प्रकारत्रयवत्ते रूपत्रयं, अनेकस्थलेषु स्थितं ते सद्म, गोप्यं परमं ते नाम, त्वरितमेवाभिव्यक्तिसाधनं उपासनालम्बनमुपाधिं च ते वयं जानीमः इति अर्थः)॥

अत्र प्रार्थयिता प्रतिज्ञाता वा पिता एकः, स कथं बहुवचनं प्रयुञ्जीत? इति विमर्ष्टव्यं भवति। तथा बालकः एवं वर्तेतेति प्रथम-मन्त्रार्थः। वयमेवं जानीम इति द्वितीयमन्त्रार्थः। कथमेतौ द्वावर्थौ सङ्गतौ भवतः? इति च विमर्ष्टव्यं भवति। यावच्छक्ति हि साङ्गत्यं संपादनीयम्। इति॥

अशक्यसम्पादनैवैवञ्जातीयवाक्यसमुदाये साङ्गतीति प्राप्ते ब्रूमः सुसम्पादनैव साङ्गतीति॥

इह हि जातमात्रमुद्दिश्यावश्यमनुतिष्ठेदिति प्रतिजानीते पिता॥ अजानन् कथमनुष्ठातुमीशीत? अनुपदिष्टश्चादृष्टार्थकर्माणि कथं जानीयात्? प्रतिज्ञातारञ्च पितरमतीत्य कोन्य उपादिशेत्? स च पिताऽजानन्नोपदेष्टुमीशीतेति तत्पितृतस्तस्यानुष्ठेयार्थावगतिः एवं तस्य तस्येति आमूलभूतऋषिगमने विश्रमः। मूलंऋषेः ऋषित्वादेवावगतिरिति नान्योपदेष्टृप्रतीक्षेति नानवस्थापातः॥

एवं च मूलपुरुषादारभ्य मत्पितृपर्यन्तं सर्वे यथा तत्तत्पित्रुपदेशेनानुष्ठेयार्थानजानन्, यथा वा मत्पित्रुपदिष्टोहं जानामि, एवं मयोपदिष्ट एष बालको जानीयात् इत्येवं प्रकृते अपेक्षितार्थः। स च 'वयं विद्म' इति मन्त्रांशेन दीपकालङ्कारविधयोक्तः। उत्तमपुरुषप्रयोगेण ह्यस्मदर्थः कर्ता प्राप्नुयात्—स च बहुवचनान्त इति वयमित्युपस्थितं भवति। तथाच वासिष्ठः पिता, वसिष्ठादयः मम पितृपर्यन्ताः पुरुषाः अहं बालश्चेति उच्चार्य यद्येकशेषं कुर्यात्, तर्हि तस्य वयमिति पदं एकं शिष्टं स्यात्। 'त्यादादीनि सर्वैर्नित्यं', 'त्यदादिषु च परं' इत्यनुशासनात्॥

तथाच मणिः शाणोल्लीढः—तनिम्ना शोभन्ते गलितविभवाश्चार्थिषु नृपाः' इतिवत् 'वयं विद्म' इत्यत्रापि दीपकालङ्कारसिद्धिः।

छन्दसि कालानियमात् भूतभवद्भविष्यत्कालपरत्वं त्रिविधाश्रयानुरोधात् ग्रहीतव्यमिति विशेषः ' इति ॥

अथवा ' आशंसायां भूतवच्चे ' त्यनुशासनात् आशास्यमानमिह ज्ञानं लटा बोध्यते । ' विदो लटो वेति ' मसो मादेशः । ' द्व्यचोऽतस्तिङ ' इति संहितायां दीर्घः । अत्रापि रूपकालङ्कारविधया निर्देशः । उपदिश्यमानोपि आध्यात्मिकादिप्रतिबन्धकनिरुद्धो मानाम नावगमत् बाल इति प्रार्थनातात्पर्यम् । यथा मत्पर्यन्तमप्रतिहतज्ञानास्तद्वदिति दृष्टान्तार्थश्च ॥

इह पारमर्षवचनविवृतिप्रस्तावे धीशब्दार्थौ विवृतो, न स प्रस्मर्तव्यः । अनवाप्तचैतन्यच्छाया अन्तःकरणवृत्तयो न विषयानवभासयेयुर्जडा हि ता इति ततः स्फुटितम् । चैतन्यं चात्मरूपम् । तच्चावृतमज्ञानेन, तत्तद्वृत्त्युपारूढं चैतन्यमेव तत्तदवस्थाज्ञाननाशकम् । तदिदमाह मन्त्रः ' स्वाधीः ' इति आत्मीयत्वेन धियो विशिंषन् ॥

' त्रेधा त्रयाणि ' प्रथममन्त्रावगतात्रिरूपीवादः । अथवा अन्नवातवर्षैरनुरुद्धेश्वराज्ञान् अनुगृह्णन्तीः उल्लङ्घिततदाज्ञांश्च निगृह्णन्तीस्त्रयीर्मूर्तीर्भगवत आह पृथिव्यन्तरिक्षद्युस्थानस्थाः त्रेधा त्रयाणीति । तथाचाम्नायः ' नमो रुद्रेभ्यो ये पृथिव्यां येषामन्नमिषवः, ये चान्तरीक्षे येषां वात इषवः ये च दिवि येषां वर्षमिषवः', इत्यादिः । ' ता इमा मूर्तयः प्रागाद्यखिलदिक्का नः सुखयन्तु । मां द्विषतः मयाद्वेष्यमाणांश्च हिंसन्त्विति ' मन्त्रशेषसारः । स एव हि परमेश्वर इहोपक्रान्तः ' असौयस्ताम्रो अरुण उत बभ्रुः सुमङ्गलः । ये चेमां रुद्रा अभितो दिक्षु श्रिताः सहस्रशोऽवैषां हेड ईमहे । असौ योऽवसर्पति नीलग्रीवो विलोहितः । उतैनं गोपा अदृशन्नदृशनुदहार्य्यः । उतैनं विश्वा भूतानि स दृष्टो मृडयाति नः ' इत्यादिना । एवमाद्यर्थविस्तारश्च

मरीचिचारुचर्चायामवगन्तव्यो विस्तरभयान्नेह प्रतन्यते । 'त्रेधा त्रयाणीति' गतम् ॥

'पुरुत्रा विभृतं सद्म विद्म'। विवृतोऽयमर्थो द्वैपायनेन भगवता पार्थभगवतोः प्रश्नप्रतिवचनप्रवर्तनेन 'रसोऽहमप्स्वि'त्यादिना, तत एवावगन्तव्यः। एवं तत्तत्पुराणोक्तानि तत्तदधिकारिप्रीतानि दिव्यक्षेत्राण्यपि तत एवावधेयानि। तद्यथा स्कान्दे 'निर्मितानि शिवेनैव भूमौ स्थानानि देहिनाम्। सर्वपापविशुद्ध्यर्थं तानि वक्ष्याम्यशेषतः। अमरेशमिति प्रोक्तं स्थानं सर्वार्थसाधकम्। ओङ्कारसंज्ञस्तत्रेशश्चण्डिकाख्या महेश्वरी। तत्र देवं च देवीं च श्रद्धया परया सह। तत्तन्नाम्ना तु संपूज्य मुच्यते सर्वपातकैः। एवं प्रभासस्थाने सोमनाथो देवः पुष्करेक्षिणी देवी, नैमिषस्थाने देवदेवः लिङ्गधारिणी, पुष्करे रजोगन्धिः पुरुहूता, इत्यादीनि। पुरुत्रा बिभृतं सद्म विद्मेति गतम् ॥

'यत् गुहा तन्नाम विद्म'। नित्यनैमित्तिककाम्यतया जप्याः तत्तदधिकारिप्रीताः सर्वे मन्त्राः भगवतः परमेश्वरस्य नामानि तत्तच्छास्त्रावधेयानि। यद् गुहा तन्नाम विद्मेति गतम् ॥

'यत आजगन्ध तमुत्सं विद्म' यादृग्यादृग्रूपावलम्बनं ध्याने साक्षात्कारायेष्टं तत्तादृशमवलम्बनं जानीयाम्। तानि च हृदयपुण्डरीकादीनि॥

'ब्रह्मरन्ध्राभिधं स्थानं विशिष्टं योगिसेवितम्।
विमुक्तिसाधनं नृणामिति विद्धि विचक्षण ॥
मुखमण्डलमाश्चर्यं भुक्तिमुक्तिफलप्रदम्।
मोहनाशकरं साक्षात् स्थानं विद्धि जनार्दन ॥
चक्षुषी च तथा श्रोत्रे नासिका च जनार्दन।
गण्डोष्ठदन्तमूर्धा च स्थानान्यास्ये ममानघ ॥'

इत्यादि स्कान्दादिवचनप्रमितानि तत एवावगन्तव्यानि। यत आजगन्ध तमुत्सं विद्मेति गतम् ॥

तदेवमत्र बहुवचनोपपत्तिः । तत्सिद्धा मन्त्रद्वयार्थसाङ्गती । ततश्चानादिकालादारभ्यैवमुपदेशज्ञानानुष्ठानसम्प्रदायः स्फुटितः । ततश्च जातसंस्कृतौ प्रसिद्धमर्थमनुसन्दधानो महाकविः नामेति पदेनावगमयतीति च ॥

ननूपनीतैरवश्यं गायत्री जप्येति यावदुक्तं भवति तावदुक्तं भवति 'वैवस्वतो मनुर्मनीषिणां माननीय' इति महाकविसूक्त्येति व्याख्यायि । स एष एवमाख्यान् कविर्नियमयतीत्यास्थितं भवति । तथा अतिष्ठमानश्च 'अष्टवर्षं ब्राह्मणमुपनयीत, तमध्यापयीत' इत्येवञ्जातीयकमाम्नायमुपरुन्ध्यात्, यो वेदं तेन जप्यमाचष्टे । यतश्च खलु मन्त्राः उच्चावचाः खिलत्वेन व्यपदिष्टाः गणेशगुहदुर्गाहरिहरादीनां तत्रैवाम्नायेऽन्तर्भवन्तीति शिष्टानां वादः, ततस्त एते मन्त्रास्तत्तत्तन्त्रतोऽप्यवगम्यमाना गुरूपदिष्टा जप्या उपनीतैस्तत्तदभिलषितफलजनका इत्यध्ययनशास्तुराम्नायस्य हृदयमिति चेत्---

नोपरोधो गतिसामाम्यात् ॥

समानमेव ह्यवगमयन्ति महर्षयः । ये मन्त्रान्तराणि तत्तत्फलकामानां जप्यान्यवगमयन्ति, त एव गायत्रीद्वारकमेतदवगमयन्ति । यथाह भगवान् शौनकः—

निष्कृतिर्न हि वेदानां मन्त्राणां कलिदोषतः ।
कलिदोषनिवृत्त्यर्थं गायत्रीमाश्रयेद्द्विजः ॥ १ ॥
गायत्रीमन्त्रसिध्यर्थं गायत्रीं त्र्ययुतं जपेत् ।
सर्वेषां वेदमन्त्राणां सिध्यर्थं लक्षकं जपेत् ॥ २ ॥
गायत्रीं न्यासपूर्वां च सप्तव्याहृतिसम्पुटाम् ।
त्र्ययुतन्तु जपेत्पूर्वं गायत्री सिद्धिदा ततः ॥ ३ ॥
त्रिमधु वै त्रिसाहस्रं गायत्र्या जुहुयादथ ।
भूसुराणां सुराणाञ्च भेदो नास्ति जगत्त्रये ॥ ४ ॥

प्रथमं लक्षगायत्रीं सप्तव्याहृतिसम्पुटाम् ।
ततः सर्वैर्वेदमन्त्रैः सर्वसिद्धिं च विन्दति ॥ ५ ॥
होमः कार्यश्च गायत्र्या होतव्यं त्र्ययुतं मधु ।
वेदमन्त्रास्ततः सम्यक् द्विजानां कामधेनवः ॥ ६ ॥
तर्पणञ्चाभिषेकञ्च होमं विप्रांश्च भोजयेत् ।
चिन्तामणिः सुरनदी कामधेनुः सुरद्रुमः ॥ ७ ॥
भवेदित्याह मन्त्रार्थे ऋग्विधानेन शौनकः' । इत्यादि ॥

तदिहैवञ्जातीयकप्रमाणावलम्बनो नियमथन् महाकविः कथ मुपरुन्ध्यात् तत्तादृक्षं स्वाध्यायम्? ॥

एवं वा—नोपरोधोगतिसामान्यात् ॥

'तद्धेतोरेव तद्धेतुत्वसम्भवे मध्ये किन्तेन' इत्यस्ति न्याय विदामनुक्रमणम् । इह चानुपास्य गायत्रीमन्यान्मन्त्रानुपासीना न तत्तत्कामेभ्यः कल्पेरन्निति पारमर्षवचनार्थस्याध्येति महाकविः । तथा तामेवगायत्रीमुपासीनास्तत्तत्कामेभ्योऽपि कल्पेरन् किमन्योपासनया । आख्यायि च परमर्षिणा शौनकेन चिन्तामण्यादिवादेनाखिलानीष्टा गायत्र्युपासनायामायतन्त इति । तस्मात्समानाः फलगतयो गायत्री भवन्ति, या अन्यमन्त्रेभ्यः, इति गतिसामान्याभिसन्धिमात्रोपरुन्ध्यात् कमप्याम्नायामिति ॥

ननु गायत्री जप्येति स्मार्ती सम्प्रतीतिः, सर्वे मन्त्रा जप्या इति श्रौती सम्प्रतीतिः । न च स्मर्ती श्रौतीं बाधेतेति मीमांसकमर्यादा । यथाहुः—'विरोधे त्वनपेक्षं स्यात् असति ह्यनुमानं' इति इति चेत् भावानवबोधात् । यो हि गायत्रीमुपास्योत्पन्नतत्तन्मन्त्रजपार्हन्ती कोन्यान्मन्त्रान् जपेत्, न तस्य श्रौती संवित् स्मार्त्या बाध्यते उपनीताधिकारिजिप्यता सर्वमन्त्राणां न मात्रयापि परित्यक्तेति । चास्ति वचनं 'उपनीतोऽनुपास्यैव गायत्रीमन्यान्मन्त्रानुपासीतेति'

वैपरीत्यं तु दर्शितम् । तस्मात् सर्वेष्टदा गायत्रीति तत्र पक्षपातः कवेः स्थाने इति सिद्धम् । आम्नायदर्शनाच्च ॥

महर्षिदिष्टसर्वैश्वर्यप्रदत्वबोधकमाम्नायं पश्यन् गायत्रीं उपास्यां निरदिक्षत्कविरिति वदामः । य आम्नायस्त्रिसन्ध्यमुपासकमात्रैरनुदिनमनुमन्त्र्यते । तथाहि—देवासुराः संयत्ता आसन् । तेषां गायत्र्योजो बलमिन्द्रियं वीर्यं प्रजां पशून् सङ्गृह्यादायाप्रक्रम्यातिष्ठत् । तेमन्यन्त 'यतरान् वा इयमुपावर्त्स्यति त इदं भविष्यन्तीति' । तां व्यह्वयन्त । विश्वकर्मन्निति देवाः । दाभीत्यसुराः । सा नान्यतरांश्चनोपावर्तत । ते देवा एतद्यजुरपश्यन् । 'ओजोऽसि सहोऽसि बलमसि भ्राजोऽसि देवानां धामनामासि विश्वमसि विश्वायुः सर्वमसि सर्वायु रभिभूरिति' वाव देवा असुराणां ओजो बलमिन्द्रियं वीर्यमवृञ्जत— इत्यादिः । (युयुत्सुभ्यो देवासुरेभ्य आत्ततत्षट्फलादृष्टा गायत्री अपाक्रामत् । अथासारास्ते गायत्र्यनुग्रहनिबन्धनं सर्वैश्वर्यलाभं निश्चिन्वन्तस्तामाह्वयन्, विश्वकर्मन् इति देवाः, दाभि! इत्यसुराः । नैतानुभयान् सा तां षडर्थीं दातुमयासीत् । अथ सर्वं वेदं विमृश्यावगतगायत्रीप्रभावाः महिमख्यापनैर्नामभिरेनामाह्वयन्देवाः ततस्ते सर्वेश्वराः जाता इति) आम्नायार्थसङ्ग्रहः । इह विश्वसर्वपदाभ्यस्ताखिलैश्वर्यरूपता, तद्भोगयोग्यतारूपायूरूपता चोक्ता तदुभयदातृत्वनिबन्धनेतिज्ञेया । गायत्रीमहिमादिविशेषाः महाकविसूत्रिताः वसिष्ठविश्वामित्रादिकल्पतोऽवसेयाः विस्तरभयान्नेह प्रदर्श्यन्ते । तदिदं सर्वमववगच्छन् महाकविः सर्वसिद्धिकरं प्रणवं दृष्टान्तयतीति सुश्लिष्टं सर्वम् ॥

तत्र प्रणवपरतां सन्यासिनो भगवान् बोधायन आह—"वृक्षमूलिकोवेदसन्न्यासी । वेदो वृक्षः । प्रणवस्तस्य मूलं । प्रणवात्मको वेदः । प्रणवं ध्यायेत् । प्रणवो ब्रह्मभूयाय कल्पते इति होवाच प्रजापतिः" इति ॥

सविशेषं जपं तत्फलञ्चाह भगवान् द्वैपायनः पाद्मे—

परहंसव्रती यस्तु प्रणवाभ्यासशीलतः ।
यद्यनुत्पन्नविज्ञानो विरक्तः संयतेन्द्रियः ॥
यावज्जीवं जपेन्मन्त्रं प्रणवं ब्रह्मणो वपुः ।
ह्रस्वो दहति पापानि दीर्घो मोक्षप्रदायकः ॥
प्लुतस्तु सर्वसिध्यै स्यात् प्रणवस्त्रिविधः स्मृतः । इति ।

ननु जप्येनैव सिद्धिरित्यसम्बद्धमुपन्यस्तम्—यावता होमतर्पणाभिषेकविप्रभोजनावगमकं शौनकीयं वचनमभिहितम् । अस्ति च यामलादावीश्वरादिवचनम् ॥

जपार्चापूर्वको होमस्तर्पणञ्चाभिषेचनम् ।
भूदेवभोजनञ्चैवम्प्रकारैषा पुरस्क्रिया ॥
इति पञ्चाङ्गतः सिद्धिं मन्त्री शीघ्रमवाप्नुयात् ।
तेजस्वी ब्रह्मवर्चस्वी निग्रहानुग्रहक्षमः ॥
भवेदचिरकालेन सत्यं जानीहि पार्वति । इत्यादि ।

तज्जप्यमात्रतः सिद्धिवाद्येवञ्जातीयकं प्रमाणमुपरुन्ध्यादिति चेत्—

नोपरोधो गतिसामान्यात् ।

पञ्चाङ्गतः इति प्रदर्शितम् नैतत्प्रस्यर्तव्यम् । यतश्चैतान्यङ्गानि, नातः सिद्धिजनकानि । अपि तु सिद्धिं जनयतो जप्यस्य सहकारीणि । यथा च स्वर्गकामो यजेतेति विधिप्रमितं फलजनकं यागमुपकुर्वन्ति अङ्गानि दीक्षणीयादीनि न फलजनकानि तद्वत् । तदुभयत्रावगतिः फलजनकत्वस्य समानेति नोपरुन्ध्यादिति युक्तम् ॥

एवं वा—नोपरोधो गतिसामान्यात्—

यथार्चाद्यवगमकमीश्वरादिवचनमवगच्छामः एवं जप्यमात्रेण सिद्ध्यवगम्यकमपि तादृग्वचनमवगच्छामः । यथा रुद्रयामले ईश्वरवचनम्—

'होमाशक्तौ जपं कुर्यात् होमसंख्याचतुर्गुणम् ।

षड्गुणश्चाष्टगुणितं यथासंख्यं द्विजातयः' । इत्यादि ।

ब्रह्मसंहितायामपि—

'अशक्तावुक्तहोमस्य जपस्ताद्विगुणो भवेत् । इति ॥

तदिदं सर्वमभिसन्दधानेन महाकविनोक्तं 'वैवस्वतो मनुर्मनीषिणां माननीयः' इति । एवमादिकं प्रमाणं ज्ञात्वा मुख्यानुकल्पविधिज्ञः यथाशक्ति पूजयेदिति तदर्थात् ॥

येतु कृतैवमाचरणां नो नैष मनुस्सिद्ध इति अप्रमाणमेवैवञ्जातीयकानि वचनानि, ततस्तराश्च 'वैवस्वतो मनुर्माननीय' इति कविवाद इति वदन्ति, तान्निराचष्टे महाकविः माननीय इत्यानीयरा प्रत्ययेन पूजाया आवश्यकताबोधकेन ॥

अयमभिसन्धिः 'दोषनाशे गुणाधाने च फलसिद्धिरायतते । न चानुष्ठाता देवदत्तः प्रभवति इयन्त एव दोषाः मदीया इति वा इयता च जपैनैते नश्यन्ति इति वावधर्तुं, तस्मान् न देवदत्तेन सकृदनुष्ठायोदासितव्यं, अपितु यावत्फललाभं असकृदावर्तनीयो मनुः ॥

कर्मणा प्रबलेनैव प्रतिबन्धे विरोधिना ।

यदि सिद्धिर्न भवति द्विस्त्रिर्वा पुनराचरेत ॥

इत्यादिशास्त्रमनुसन्दधानेन ।

असकृदनुष्ठानेऽज्ञकृतोपहासमश्रद्धधानेन ।

दैवेनोपहतो नित्यमैहिकानि न कारयेत् ॥

(प्रारब्धमनुजपोपरोधीनि स्वयं वान्यद्वारा वा न कुर्यादित्यर्थः)

नापराधोऽस्त्यस्य किञ्चित् प्राप्नुयादुपहास्यताम् । (यदि लोकत इति शेषः) ॥

आमुष्मिकं फलं तस्य भविष्यति वरानने ॥

(तदेव फलं अनेकविधं विशिनष्टि)—

ब्रह्मलोकमवाप्नोति ब्रह्मणा सह मोदते ।

अथवा विष्णुलोकं च विष्णोः सायुज्यतां व्रजेत् ॥

सूर्यस्य वा शिवस्यापि चन्द्रस्येन्द्रस्य वा पुनः ॥
यं यं काममधीयीत तन्तमाप्नोति निश्चितम् ।
गायत्रीमन्त्रजप्येन सत्यं सत्यं न संशयः ॥

इत्यादीश्वरवचनान्यवधरता चेति ' ॥

सैषानुसंहतिरश्रद्धाऽवधृतिश्चोक्ता कविना 'मनीषिणां' इति विद्वद्वाचकेन पदेन ॥

अपापस्यैव फलसिद्धिं शास्ति ब्रह्मसंहिता—
सुतीर्थे प्रजपेन्मन्त्रं पूर्वपापप्रशान्तये ।
शुद्धदेहाय मन्त्रोक्तः ततः सिद्धिं प्रयच्छति ॥

इत्यादिना । इह च मान्त्रिकमूर्धन्यः कविरौमामहेश्वरमन्त्रपरमः तद्देवतामनुस्मरन् काव्यमारभते । यतो मान्त्रिकप्रक्रियया शिवशक्त्यात्मकं 'ह्रीं' इति बीजं वागर्थाविवसंपृक्तौ जगतः पितरौ इत्यनेन निर्दिशति, वन्द इत्यनेन च नम इति निर्दिशति, तस्य च शिवायां शिवे च पृथगन्वयाय पार्वतीपरमेश्वरौ कर्मतया निर्दिशति, तारादिमत्वं सर्वमन्त्रसाधारणं चानुसन्धत्ते, ततः ओं, ह्रीं, नमः शिवायै नमः शिवायेति मन्त्र उक्तः इत्यन्यदेतत् ॥

तत्सिद्धमिह 'नोपरोधो गतिसामान्यादि' ति सूत्रेण 'कथं च संशयापगम' इति तृतीयं पर्यनुयोगं निरुन्ध्म इति ॥

तस्मात्सिद्धं महर्षिरामं स्वाध्याये निरममाणो महर्षिजापं च गायत्रीं जपन्नेतदुभयं परमधर्मं गमयतीति इति संक्षेपः । ओंन्तत्सत् ॥

ब्रह्माद्या यत्कटाक्षाज्जनिसुखलयदाः प्राणिनां सर्वकालं
केनाद्या ब्रह्मविद्याः विभवमतितरां ख्यापयन्त्येव यस्याः ।
यद्भक्त्या कालिदासः श्रुतिरसमदुहत् काव्यमेषा सुराणां
सर्वेषां शक्तिरूपादितिसुतककृतस्रग्धरा यस्य रक्षाम् ॥ १ ॥
कुर्वन्ती चिन्तयन्ती सततमचलतः क्षेमयुक्तं सुयोगं
वश्याऽऽस्ते क्षोणिपाले निजभजनरते यत्र वश्यत्वबोधम् ।

भक्तानां भावयन्ती यदुकुलतिलकः सोयमाचन्द्रतारं
दाक्षिण्याद्यैर्गुणौघैरनुपमयशसा बन्धुमित्राद्युपेतः ॥ २ ॥
जीयादित्याशिषो मे पुनरुदितकृताद्दोषतो रक्षतात्सा
न स्याद्वा प्रार्थनेयं विबुधमपि यतो वर्धयेद्ब्रह्मजातिः ।
जीवातुं पण्डितानामतुलिततपसां अक्षयं पुण्यपुञ्जं
श्रीकृष्णं नाल्वडीतिप्रथितपदजुषं श्रीलकर्णाटराजम् ॥ ३ ॥
कल्पद्रुं संश्रिता या श्रुतिमुखविविधश्लाध्यविद्यालयाख्या
श्रीवल्लीकल्पवल्ली दिशि दिशि तनुते धर्मसंवित्फलानि ।
धर्मार्थौ काममोक्षाविति जनसुवृतं प्राप्यते यत्प्रभावात्
प्रेत्याप्यं नारकीयं व्यसनमपि सुखं त्यज्यते यन्महिम्ना ॥ ४ ॥
पाठकपाठ्याख्यानैर्द्विजैस्तु तस्यां चकास्ति धर्मस्य ।
शाखा याऽस्यां प्रथमोऽध्यापक आसेव्य चामुण्डाम् ॥ ५ ॥
श्रीकालिदासमस्या भक्तं ध्यात्वा प्रसादितस्तेन ।
शिवसुब्रह्मण्याख्यो द्विजशिशुरेष स्वदेय काव्यफलम् ॥ ६ ॥
आयात मित्रवर्याः स्वादं स्वादं स्रवन्ति मधुधाराः ।
श्रीकालिदासवैदिकसूनृतफलकानि भुज्यन्ताम् ॥ ७ ॥

इति श्रीमन्महामहोपाध्याय सर्वतन्त्रस्वतन्त्र श्रीमत्त्यागराजमखिवर–म–म–ध्याय श्रीमत्सुन्दरशास्त्रिमहाशय–म–म–ध्याय श्रीमत्पञ्चापगेशशास्त्रिवर्य गुरुपरम्परावाप्त ब्रह्मविद्यालेशस्य, श्रीमन्म–म–ध्याय त्यागराजमखिवर, मीमांसकमूर्धन्य श्री-रामशास्त्रिवर्य–म–म–ध्याय श्रीमद्वैद्यनाथशास्त्रिवर्य गुरुपरम्परावाप्ताध्वर-मीमांसामर्मलेशस्य, पण्डितप्रवर (श्रृङ्गेरीजगद्गुरुसंस्थान) वेदान्तवि-शारद (मद्रास्) मीमांसाविद्वान् (मैसूरु) बिरुदस्य, श्रीमन्महीशूर-महाराजसंस्कृतमहापाठशाला धर्मशास्त्रविभागे प्रधानाध्यापकस्य श्रीशिवसुब्रह्मण्यशास्त्रिणः कृतिषु महाकविहृदयरत्ना-करे काव्यजिज्ञासास्फूर्तिर्नाम प्रथमोमणिः ॥

श्रीशिवश्शरणम् ॥

॥ काव्यजिज्ञासा समाप्ता ॥

---

4

SAN. M.

## सादरस्वीकारः

१. श्रीशङ्करगुरुकुलपत्रिका (संपुटः १. सञ्चिका १.)—

[संस्कृतत्रैमासिकी पत्रिका ; संपादकः—गुरुभक्तशिखामणिः, शास्त्रप्रसारभूषणसारः टि. के. बालसुब्रह्मण्यार्यमहोदयः, बि.ए.; प्राप्तिस्थानम्—श्रीवाणीविलासमुद्रणालयः, श्रीरङ्गम्; वार्षिकमूल्यम्—६-०-०.]

पत्रिका चैषा घनमसृणबहुपत्रमयी, समीचीनदेवनागरलिपिभिः समुद्भासिता, तत्तच्छास्त्रपरिश्रान्तैः पण्डितप्रवरैः संशोधितसमधिकलेखा, प्रधानतः परिलुप्तप्राचीनमीमांसादिप्रबन्धबहुला, लौकिकानन्दजनकदृश्यश्रव्यकाव्यादिभिरपि सम्भृता, आङ्गलभाषानिबद्धसमुपयुक्तविषयसन्दोहसारा च राराजत इति निवेदयितुं नितरां सन्तुष्यामो वयम्। सप्रमोदसादरमेतां पत्रिकां स्वागतीकृत्य चिरं जीवताज्जगतीति नूनमाशास्महे ॥

२. विभूतिः—

[वार्षिकमूल्यम्—२-८-०.]

एषाऽऽन्ध्रभाषामयी सचित्रपत्रिका सिकंदराबाद् नगरात् श्रीपण्डितवीरभद्रशर्मसम्पादकतया प्रतिमासमाविर्भवन्ती चारित्रिकजानपदपौराणिकादिबहुवृत्तसमलङ्कृता आन्ध्रदेशीयानामतीवोपकारिणी समधिकं समेधमाना जेगीयतां जगतीत्याशीर्व्याहारान् सामोदं वितरामो वयम् ॥

### श्रीमन्मुम्मडिकृष्णराजेन्द्रविरचितोद्दिष्टवर्णग्राहकपद्यानां कोष्ठन्यासक्रमः प्रकाश्यते.

(‘व. न. ढ. मि. खा’ इति वर्णग्राहकसूत्राक्षराणि)

व—चण्डीं वीरकथागारां मणिकोटीरबन्धुराम् ।
चामुण्डिकां चामराजबाहुविक्रमपोषिणीम् ॥ १ ॥

न—सिंहपीठे सुखासीनां खगपिञ्छालिवींजिताम् ।
भूनाथसन्ततिनुतां सोमखण्डावतंसिनीम् ॥ २ ॥

ढ—शान्ताहितच्छमहिषां तूणजङ्घां शुचिस्मिताम् ।
समूढसुममञ्चस्थां बाहाभूषाफणामणिम् ॥ ३ ॥

मि—ताण्डवालीढवलयझणज्झणवरारवाम् ।
शाटीलुठत्तारहारां सिंहवेषरथस्थिताम् ॥ ४ ॥

खा—महीशूरपुदीभासि यदुवंशफलप्रदाम् ।
बालावेषधरां देवीं वन्देऽहं विन्ध्यवासिनीम् ॥ ५ ॥

[इति वर्णग्राहकपद्यानि ।

| ग्राह्यवर्णाः | वर्णग्राहकपद्याङ्काः | | | | |
|---|---|---|---|---|---|
| क | व | .... | .... | .... | .... |
| ख | न | .... | .... | .... | .... |
| ग | व | न | .... | .... | .... |
| घ | ढ | .... | .... | .... | .... |
| ङ | .... | .... | .... | .... | .... |
| च | व | ढ | .... | .... | .... |
| छ | न | ढ | .... | .... | .... |
| ज | व | न | ढ | .... | .... |
| झ | मि | .... | .... | .... | .... |
| ञ | .... | .... | .... | .... | .... |
| ट | व | मि | .... | .... | ... |

| ग्राह्यवर्णाः | वर्णग्राहकपद्याङ्कः | | | | |
|---|---|---|---|---|---|
| ठ | न | मि | .... | .... | .... |
| ड | व | न | मि | .... | ... |
| ढ | ढ | मि | .... | .... | .... |
| ण | व | ढ | मि | .... | .... |
| त | न | ढ | मि | .... | .... |
| थ | व | न | ढ | मि | .... |
| द | खा | .... | .... | .... | .... |
| ध | व | खा | .... | .... | .... |
| न | न | खा | .... | .... | .... |
| प | व | न | खा | .... | .... |
| फ | ढ | खा | .... | .... | .... |
| ब | व | ढ | खा | .... | .... |
| भ | न | ढ | खा | .... | .... |
| म | व | न | ढ | खा | .... |
| य | मि | खा | .... | .... | .... |
| र | व | मि | खा | .... | .... |
| ल | न | मि | खा | .... | .... |
| व | व | न | मि | खा | .... |
| श | ढ | मि | खा | .... | .... |
| ष | व | ढ | मि | खा | .... |
| स | न | ढ | मि | खा | .... |
| ह | व | न | ढ | मि | खा |

संयुक्ताक्षराण्यर्धाक्षराणि च नगण्यन्ते—

वर्णग्राहकसूत्रार्थं कोष्ठैरेभिस्सुधीमुदे ।
समुदश्चयदेवं श्रीशैलश्रीवासदेशिकः ॥

तिरुमले–सत्यागालं श्रीनिवासदेशिकाचार्यः,
महाराजशारदाभाण्डागारप्रधानपण्डितः.

# भारतषोडशी

यत्र प्रालेयधाराकवचितशिखरैर्व्योमरन्ध्रं निरुन्धन्
श्रीमान्नीहारशैलो द्रढयति विदुषां स्वर्गसोपानबुद्धिम् ।
यस्मिन्नास्थाय योगं विगळिततमसो ज्योतिरार्षं निदध्युः
तस्मिन्पुण्यैकलभ्ये भरतजनपदे जन्मलाभोऽपि शस्तः ॥ १ ॥

तार्थक्षेत्रपवित्रितं जनपदं पुण्याश्रमस्सन्ततै
विप्राणां सदनं विनेयभवनं धर्मार्थमर्थस्पृहा ।
आकीटादिसमग्रभूतदयिताः पूताः प्रशान्ता जनाः
यत्रासन् सुकृतैस्तदत्र हि वयं जन्मग्रहानान्दिनः ॥ २ ॥

शैवं क्षेत्रमनुत्तमं हरिपदं शाक्तं स्थळं यत्र च
स्यन्दन्ते कलुषप्रहाणनिपुणास्सप्तापि गङ्गादयः ।
शैलास्सह्यमहीध्रविन्ध्यमलयप्रालेयनीलादय-
स्तत् स्याद्भारतसंज्ञकं हिमनगात्कन्याकुमारीमनु ॥ ३ ॥

मधुरशिशिरपथ्यस्वादुतोयास्तटिन्यः
फलकुसुमदळत्वक्कन्दमूला वनान्ताः ।
विदितनिखिळतत्त्वा जङ्गमाश्शास्त्रकोशाः
प्रतिपदमभिवृद्धिं चक्रिरे यत्र विप्राः ॥ ४ ॥

विद्याश्चतुर्दशकला विविधागमाश्च
यत्र प्रशान्तहृदयैर्मुनिभिः प्रक्लृप्ताः ।
जन्मग्रहं चकमिरे विबुधाश्च यत्र
तद्भारतं जयतु वर्षमिदं चिराय ॥ ५ ॥

मन्वादयो मुनिवराः सगरादिभूपाः
व्यासादयश्च विबुधाः करुणासमुद्राः ।

वाल्मीकिमुख्यकवयः कपिलादयोऽन्ये-
प्यासन् यदत्र तदलं गुणवर्णनेऽस्य ॥ ६ ॥

तत्त्वार्थनिर्णयकृते बहुदर्शनानि
क्लृप्तानि यत्र परमार्थबुभुत्सयैव ।
यानि प्रभिन्नविषयाण्यपि सूक्ष्मतत्त्व-
प्रस्थानमेव परमं प्रथयन्ति लोके ॥ ७ ॥

जित्वा समुद्रपरिखां वसुधां बलेन
लब्ध्वा समग्रनृपमण्डलनाभितां च ।
इष्टाश्वमेधमखयागशतैर्नरेन्द्राः ।
यत्रैकराजपदवीसुखमन्वभूवन् ॥ ८ ॥

भूतेषु भूतेषु विचित्य धीरा
यत्र प्रशान्ताः प्रकृतेः परस्तात् ।
ज्योतिर्मयं वाङ्मनसोरतीतं
ब्रह्माधिजग्मुर्जयतात्तदेतत् ॥ ९ ॥

विविधकुसुमकीर्णारण्यभूमिर्वितानी-
कृतललितलताग्रा निर्झरोद्गाररम्या ।
सुरभिपवनचारा भारतीभूतधात्री
दिशतु विविधचित्रानन्दसन्तानलक्ष्मीम् ॥ १० ॥

यत्र स्वशाख्यनिगमानपठन्प्रमोदा-
त्सायं प्रगे च वटवो विहिताग्निकार्याः ।
स्वाहावषट्कृतिरवप्रतिनादिताशाः
यत्राध्वरे द्विजवरा व्यभजन् हवींषि ॥ ११ ॥

यत्र द्विजेन्द्रपरिकल्पितयज्ञभागा-
नाजाजह्रिरे सुरवरा द्विजमन्त्रभूताः ।
यत्रातिथेयभवनेषु कृतोपचाराः
सायं ग्रहा मुनिवरा न्यवसन् सुखेन ॥ १२ ॥

यत्रारुणोदयसमीरणवीतनिद्राः
ब्रह्माक्षराण्यधिजगुः शुचयो द्विजाग्र्याः ।
यत्र प्रशान्तहृदयाद्धिरेतपांसि
ज्योत्स्नाभिरामपुळिनासु नदीषु विप्राः ॥ १३ ॥

यत्राग्निहोत्रपरिपूतगृहेषु नित्यं
ब्रह्माक्षरार्पितहव्यसुगन्धिवाताः ।
आप्याययन् पथिकवृन्दमभूतपूर्व-
मोदावहाः सपदि संभृतकल्मषघ्नाः ॥ १४ ॥

यत्र प्रवेकमणिरत्नसुवर्णलोह-
मुख्यानि भूमिरधिकं सुषुवे खनिभ्यः ।
यत्र प्रकाममुदिताश्च निरीतिबाधाः
व्यस्मार्षुरेव सुरलोकसुखानि लोकाः ॥ १५ ॥

ईदृग्ब्रह्ममहिमशालिनि भारतेस्मिन्
पूर्वानुभूतसुखसंस्कृतिमात्रशेषे ।
जागर्ति धर्मपरता प्रतिभाविशेषो
भूतेषु साम्यमिति यत्तदनन्यगामी ॥ १६ ॥

महाविद्वान् कुक्के सुब्रह्मण्यशास्त्री.

# यादवाभ्युदयम्

---

अयि मान्याः—

सुविदितमिदं तत्रभवताम्—समादृतसाहितीसौहितीकैरात्मानन्दायापेक्ष्यमाणेषु काव्यरत्नेष्वेकतमं श्रीमद्भिः सर्वतन्त्रस्वतन्त्रधिषणैः वेदान्ताचार्यैरनुगृहीतं यादवाभ्युदयं नाम काव्यरत्नम् । इदं च तत्र तत्र बहुभिः बहुधा सम्मुद्रितमपि पुस्तकदौर्लभ्यात् न पारयति प्रेक्षावतां तादृशं कुतूहलमापूरयितुम् । इदं च समालोच्य महीशूरनगरस्थब्रह्मतन्त्रपरकालस्थानाभिषिक्त श्रीलक्ष्मीहयग्रीवदिव्यपादुकासेवकश्रीमदभिनवरङ्गनाथब्रह्मतन्त्रसंयमीन्द्रकृपापरिपोषितया श्रीमन्निगमान्तदेशिकग्रन्थप्रचारिणीसभया नूतनतयान्ध्रलिप्या सम्मुद्रय पण्डितप्रकाण्डश्रीमदप्पदीक्षितविरचितव्याख्यासमलङ्कृतं ३५० पुटात्मकं अध्येतृजनसौकर्याय समायोजितानुक्रमणिकं प्राथमिकं सर्गषट्कं क्रय्यतया सज्जीकृतम् । पुस्तकविक्रेतॄणामन्तेवासिनां च मौल्यविषये यथोचितं साहाय्यकं (कमीषिन्) वितरिष्यते । मौल्यं चेदानीन्तनं द्वादशाणकाः भाषाप्रियैस्सहृदयैस्समादृत्य प्रोत्साहनीयोऽयं सभाया ग्रन्थसम्मुद्रणव्यवसाय इत्यभ्यर्थयते ॥

विद्वान् के. श्रीनिवासरङ्गाचार्यः,
सभाकार्यदर्शी,
श्रीपरकालमठम्,
मैसूरु.

## लक्ष्मीस्तुतिपञ्चकम्

जगन्मातर्या ते पदकमललाक्षापरिचय-
प्रभावात्सारश्रीर्विलसति मुकुन्दस्य हृदये ।
तया लोकस्सर्वोऽप्यहह वरिवर्ति प्रथमत-
स्तव स्तुत्यो देवि प्रथितगरिमा दिव्यमहिमा ॥ १ ॥

कृतस्तोकायासा अपि महितमाङ्गल्यजलधेः
तवापाङ्गासङ्गाद्धनदमपि दूरे विदधते ।
अयं तु न्यक्कारस्तव जननि यं त्वं रमयसे
स च श्रीमान् भक्तानपि जगति निस्स्वान् वितनुते ॥ २ ॥

कटाक्षाः कल्पन्ते तव हरिपदाम्भोजरसिके-
ष्वनल्पप्रज्ञायै गुणगणमहिम्ने च निहिताः ।
त एवातन्वन्ति प्रथितमदमत्तेषु कमलेऽ-
विवेकप्राग्भारं जलधरनयाद्देवि बहुधा ॥ ३ ॥

कह्लारेष्वपि पङ्कजेषु बहुशो मल्लीमतल्लीष्वपि
स्वच्छन्दं चरतामयं मधुलिहां कोऽप्येष मोहोदयः ।
यन्मुग्धं मुखपङ्कजं स्मितसुधासम्भेदभोग्यं मुहुः
र्व्यालिह्येव तवाक्षिमीनयुगलं दृष्टं न तैर्निश्चलम् ॥ ४ ॥

पीयूषं विषमित्युभे सहजतां नीते त्वया पद्मजे
किं वा तत्र फलं तवेति विहिते प्रेक्षापरीक्षोदये ।
तोषायासि यतस्सतामधिगुणा दोषाय दुष्टात्मनाम्
कार्यद्वन्द्ववशाद्भवेत्सहजता निर्णीतिरेवं त्वयि ॥ ५ ॥

विद्वान् एस्. वेङ्कटाचार्यः.

मैसूरु श्रीमन्महाराजसंस्कृतमहापाठशालायां श्रीकृष्णराजसार्वभौमस्य षट्पञ्चाशत्तमवर्धन्तीमहोत्सवावसरे सभाध्यक्षैः वे ॥ धर्माधिकारि-पौराणिकरत्न-होळवनहळ्ळि शेषाचार्यैः कृतमाशीर्वादपद्ययुग्मम् ॥

आरोग्यं सविता शशी सुखततिं भूवृद्धिमङ्गारकः
प्रज्ञां सोमसुतः सुपर्वगुरुरप्यन्यादृशीं वाग्मिताम् ।
सौभाग्यातिशयं कवी रविसुतश्चायुश्शतं कल्पयन्
देवः कृष्णमहीपतौ वितनुतां श्रेयांसि भूयांसि च ॥

मूर्धा कृष्णक्षितीशः सचिवमणिरसौ चक्षुरप्याप्तवर्गः
श्रोत्रं कोशस्तु वक्त्रं सबलबलमिदं हृत्तथा राष्ट्रदुर्गम् ।
पाण्यङ्घ्रीतिप्रतीतं स्मृतिविहिततया लोकनेतुः प्रसादात्
सप्ताङ्गं राज्यमेतज्जगति विजयतां श्रीमहीशूरुराज्यम् ॥

---

# दृक्पञ्चाङ्गविमर्शशुद्धिपत्रम्

| पुट | पङ्क्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १ | ३ | व्रह्म | व्रह्म |
| ,, | ४ | विरू–नमः | विरूं–नमः |
| ७ | १६ | रवीन्दो- | रवीद्वो- |
| ८ | १५ | भूगर्भस्थानां | भूपृष्ठस्थानां |
| ,, | २० | अग्निहोत्र | अग्निहोत्रं |
| ,, | २२ | ज्ञानं | ग्रहणादिज्ञानं |
| ९ | ६ | अनुमानचतु | अनुमानश्चतु |
| ,, | १६ | वीजं | वीज |
| ,, | १८ | तत्रार्ध | नात्रार्ध |
| ,, | २० | ऽपेक्षते | ऽपेक्ष्यते |
| ,, | २४ | ध्ययम् | ध्येयम् |
| १० | २ | दृष्टु | द्रष्टु |
| ,, | २३ | युज्यते | युज्यन्ते |

*

*१० पुटान्ते स्खलिताः पङ्क्तयः

इति सूर्यसिद्धान्तटीकाकृता रङ्गनाथेनान्तेसङ्गृहीत श्लोकानुसारेण स्थिरवीजसंस्कारस्सूक्ष्मतिथ्यानयने नावश्यक इति स्पष्टमेव । भगोलभूगोलयोरेककेन्द्राभ्युपगमेऽपि ग्रहभ्रमवृत्तस्य मध्यं भूमध्ये न भवति । ग्रहभ्रमवृत्तस्य भूमेः समानान्तरस्थित्यनुपलम्भात् ग्रहाणां दीर्घवृत्तपरिधौ पारिभ्रमणमुपपद्यते । अतो मन्दफल संस्कृतमध्यस्थाने सूर्याचन्द्रमसौ भूकेन्द्रस्थो द्रष्टा पश्यति । भूपृष्ठस्थितो वीजसंस्कृतान् ग्रहान्पश्यतीति स्पष्टमेव । भूमध्य-गणितं प्रत्यक्षमिति वादिभिः पामराः प्रतार्यंते । भूपृष्ठवासिना-मस्माकं भूमध्यासिद्धा ग्रहाः कथं प्रत्यक्षा भवेयुः । न कदाचिदप्ये तत्संभवति हि ॥

| पृष्ठे | पङ्क्तौ | अशुद्धं | शुद्धम् |
|---|---|---|---|
| ११ | ४ | तत्कालातिथ्य | तत्कालतिथ्य |
| ,, | १४ | पुराधि | पुरादि |
| ,, | २२ | शांक | शाकें |
| १२ | १२ | दृक् समान एव भवेत् | दृक् सम एवं तुं |
| १३ | ९ | सत्कर्य | सत्कार्य |
| ,, | १४ | कर्ता | कर्त्रा |
| ,, | १६ | भिदं तु | भिधं तु |
| १४ | २० | रावश्य | रानवश्य |
| १५ | २ | सङ्कुलम् | सङ्कुलः |
| ,, | ४ | भुजान्त | भुजान्तर |
| ,, | ८ | अनीता | आनीता |
| १६ | १५ | न्नूनाः | न्यूनाः |
| १७ | ४ | मैव | मेव |
| ,, | १४ | सडस्र | सहस्र |
| १८ | १७ | सौराक्तं | सौरोक्तं |
| ,, | २३ | नायतीति | नायातीति |
| १९ | ३ | वराह | वाराह |
| ,, | ५ | सुप्तोत्थ्तो | सुप्तोत्थितो |
| ,, | २० | क्षित्वा | क्षिप्त्वा |
| २० | ५ | ऽन्तभूता | ऽन्तर्भूता |
| २० | ७ | भूषणे | भूषणे मक्किभट्टः । |

---

# विषयसूचना

## सम्पादकीयसमितिः

---

१. श्रीमन्तः अर्थशास्त्रविशारदाः विद्यालङ्काराः महामहोपाध्यायाः डाक्टर् आर्. शामशास्त्रिणः, बि.ए., पिएच्.डि., एं.आर्.ए.एस्., विश्रान्त मैसूरु प्राच्यकोशागाराध्यक्षाः शासनविमर्शशाखाध्यक्षाश्च

२. श्रीमन्तः प्रोफेसर् सि. आर्. नरसिंहशास्त्रिणः एं.ए., मैसूरु महाराजाकालेज् संस्कृत प्रधानोपाध्यायाः

३. पण्डितरत्नं धर्माधिकारिणः ब्र. श्री. काशी शेषवेङ्कटाचलशास्त्रिणः

४. साहित्यरत्नं महाविद्वांसः ब्र. श्री. क. गोपालकृष्णशास्त्रिणः महाराजाकालेज् संस्कृतपण्डिताः

५. ज्यौतिषरत्नं महाविद्वांसः ब्र. श्री. करूरु शेषाचार्याः, महापाठशाला ज्यौतिषप्रधानोपाध्यायाः

६. विद्वांसः ब्र. श्री. एस्. वेङ्कटाचार्याः, महापाठशाला साहित्यप्रधानोपाध्यायाः

७. श्रीमन्तः एस्. वि. कृष्णमूर्तयः, एं.ए., महापाठशालाध्यक्षाः (सम्पादकाश्च)

॥ श्रीः ॥



# श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका

प्रतिमासत्रयं प्रकटीक्रियमाणा

" कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः "

(ईशोपनिषत्)

सम्पुटम् १५]　1939–Dec.: प्रमाथी–हैमन्ती　[सञ्चिका ४

## सु भा षि ता नि

कुलं शीलं श्रुतं शौर्यं सर्वमेतन्न गण्यते ।
दुर्वृत्ते वा सुवृत्ते वा जनो दातारि रज्यते ॥ १ ॥

श्वा यदि दशति मनुष्यान् न ते जनास्तं प्रतिदशन्ति ।
यद्याक्रोशति नीचो न च तं वदतीह सज्जनः किञ्चित् ॥ २ ॥

परनिन्दा जन्मफलं परव्यापत्तिरुत्सवः ।
परदोषोपलम्भश्च खलानां निधिदर्शनम् ॥ ३ ॥

तदेतत्काकतालीयं तदेतद्वै घुणाक्षरम् ।
यदपथ्यभुजामायुर्यदनीतिमतां श्रियः ॥ ४ ॥

प्रकीर्णे विषयारण्ये धावन्तं विप्रमाथिनम् ।
ज्ञानाङ्कुशेन कुर्वीत वश्यमिन्द्रियदन्तिनम् ॥ ५ ॥

न स्वप्नेन जयेन्निद्रां न कामेन स्त्रियं जयेत् ।
नेन्धनेन जयेदग्निं न पानेन सुरां जयेत् ॥ ६ ॥

सेवा श्ववृत्तिर्यैरुक्ता तैरसम्यगुदाहृतम् ।
स्वच्छन्दचारितः क्व श्वा विक्रीतात्मा क्व सेवकः ॥ ७ ॥

दुःखे दुःखाधिकान् पश्येत् सुखे पश्येत् सुखाधिकान् ।
आत्मानं शोकहर्षाभ्यां शत्रुभ्यामिव नार्पयेत् ॥ ८ ॥

अनादरहतां सेवां दाम्पत्यं प्रेमवर्जितम् ।
मैत्रीं च हेतुसापेक्षां चेतना नाधिकुर्वते ॥ ९ ॥

लोकोत्तरं चारितमर्पयति प्रतिष्ठां
पुंसां कुलं न हि निमित्तमुदात्ततायाः ।
वातापितापनमुनेः कलशात्प्रसूति-
र्लीलायितं पुनरमुष्य समुद्रपानम् ॥ १० ॥

दातृत्वमेव सर्वेभ्यो गुणेभ्यो भासतेतराम् ।
ज्ञातृत्वसहितं तच्चेत् सुवर्णस्य हि सौरभम् ॥ ११ ॥

अकर्तव्येष्वसाध्वीव तृष्णा प्रेरयते जनम् ।
तमेव सर्वपापेभ्यो लज्जा मातेव रक्षति ॥ १२ ॥

सि. आर्. नरसिंहशास्त्री,
संग्रहीता.

## श्रीहयवदनसेवासङ्घः

———

नमस्त्रेधाविभक्तानामात्मनामन्तरात्मने ।
ब्रह्मणे हयवक्त्राय बन्धमोक्षैकहेतवे ॥

आर्या वाचकमहोदयाः, प्रमाथिसंवत्सरश्रावणशुक्लचतुर्दश्यां (२८-८-१९३९) श्रीमन्महाराजसंस्कृतमहापाठशालाया उपन्यासनिलये निरवर्ति संघेनानेन भगवतो विद्याधिदैवतस्य श्रीलक्ष्मीहयवदनस्य जयन्तीमहोत्सवः । हरिततररम्भास्तम्भैरविरलैः रसालकिसलयैः रुचिरतरैश्श्रीहयाननाद्यालेख्यैरन्यूनशतसंख्यैश्चालमकारि सभामण्डपः । निर्वर्तितनित्यकर्मानुष्ठानैः विद्यार्थिभिरष्टघण्टासमये प्रातः प्रप्रथमं परिपठिता प्राबोधिकी स्तुतिर्भगवतो हयमुखस्य । तदनु महाभारतान्तर्गतहयशीर्षोपाख्यानपारायणविविधस्तोत्रस्तवनविद्ध्युक्तपूजाश्च यथायथन्निर्वर्तिताः । सायं च घण्टापञ्चकसमये सभामण्डपगता धवलितदशदिगन्तरालाः पृथुलाश्चत्वारश्श्वेतविद्युद्दीपा 'न तत्र सूर्यो भाती'ति श्रुत्यर्थमुपदेष्टुमागतास्त्यक्तस्वासाधारणौष्ण्याश्चत्वारश्चण्डरश्मय इव समदृश्यन्त । किमयमनर्घविविधमणिगणैरेव निर्मितो मण्डप इति शङ्कामङ्कुरयन्ति स्म विविधवर्णाः विद्युद्दीपाः । अनुगतानेकसच्छात्रैरेतत्कलाशालापण्डितप्रकाण्डैरास्थानविद्वद्भिरास्थानधर्माधिकारिभिस्सविनैयरांग्लभाषाविद्वत्प्रवरैः, नानाविधसंगीतशास्त्रनिष्णातैरन्यैश्चातितरां व्यराजत्सभामन्दिरम् । अत्रान्तरे चतुर्दशवर्षदेश्यो देशिकनामा विनेयस्सत्वरमुत्थाय करोत्स्वागतम्, अगायच्चाखिलजनमनोहारिणा स्वरेणैतत्सङ्घकार्यदर्शिनापरिकालितानि प्रार्थनापद्यानि । नानाविधसंगीतशास्त्रनिष्णाताचार्यश्रीकृष्णावनीशात्समाधिगतविविधपारितोषिकोऽष्टादशवर्षदेशीयो मास्टर् इत्युपाधिमान-

वादयद्वीणांदोरेस्वामिनामा श्रीमान् । मृदङ्गञ्च मुखरयामास सुगृहीत-नामा श्रीमान् S. R. वरदाचार्यनामा । आंग्लमहापाठाशालातत्त्व-शास्त्रोपप्रधानाध्यापकाः पाश्चात्यप्राच्यवेदाञ्चलनिष्णाताः श्रीमन्तः K. R. श्रीनिवासार्यमहोदयाः M. A. 'ज्ञानस्योपयोग' इति विषय-मधिकृत्य सुचिरमुपन्यास्थन्नतिमधुरम् । अथ च निरवर्तिमहामङ्गलारति-र्भगवतस्सैन्धवकन्धरस्य । बुधबन्धुपारिगतस्यागणितगुणगणस्य कृष्ण-नाम्नस्तुर्यस्य नृपमणेः यदुवंशललामस्य हयवदनानुग्रहो निरन्तरं भूयादिति साञ्जलिबन्धं समभ्यर्थि । प्रकटीकृतनिजकौशलानामवन्ध्यी-कृतास्मदभ्यर्थनानामुपन्यासकगायकवादकशिरोमणीनां समर्पिता सां-घिकी वन्दना । अत्रावकाशदापनाद्यनेकप्रकारेणोपकृतवतामस्मत्कला-शालाध्यक्षाणां श्रीमतां S. B. कृष्णमूर्ति, M. A. महोदयानाम्, एत-त्संघाध्यक्षाणां देशिकदर्शनविजयध्वज इत्युपाधिमतामास्थानविदुषां श्रीमतां आत्मकूरु दीक्षाचार्यमहोदयानाञ्च सविनयवन्दना व्यज्ञापि। सङ्गीतकाकर्णनादिभिर्निर्भरानन्दतुन्दिलस्वान्तास्सभ्या अपि यथोचित-वचोविशेषैरभिपूजिताः । दशभ्यो वत्सरेभ्यः प्राक्प्रतिष्ठापितोऽप्ययं सङ्घो वाचकमहोदयानां स्वान्तेष्वद्यालभतात्मनः पदमिति विज्ञाप-यितुमतितरां मोमुद्यामहे ॥

व्याकरणवेदान्तविद्वान्—एम्. लक्ष्मणाचार्यः,
कार्यदर्शी.

श्रीहयवदनपरब्रह्मणेनमः

# श्री ह य व द न से वा सं घः.

## श्री हयग्रीवजयन्तीमहोत्सवदिवसे (28-8-1939) पठिताः श्लोकाः.

---

विशुद्धविज्ञानघनस्वरूपिणे नमस्त्रिधा भिन्नचिदन्तरात्मने ।
विभूतियुग्माय तमोमधुद्विषे हयाननयास्तु चराचरात्मने ॥

आरोग्यमायुर्विजयस्सुविद्या वशित्वमास्तिक्यममर्त्यभावः ।
सर्वार्थसिद्धिर्भुविमानवानां हयानन स्युस्त्वदनुग्रहेण ॥

अघवारिधिपरिशोषणचणचरणं
कमलासनकलितामितनुतिमहितम् ।
मधुकैटभविनिपातनभृतनिगमं
तुरगाननममितार्थदमिह कलये ॥

पाश्चात्ये दर्शनाब्धावधिकृतधिषणाः पण्डिताः केचिदेव
ह्यार्याणामेवकेचिन्मुनिजनमहिते तद्विनिष्ठा न केपि ।
श्रीमान् श्रीवाससूरिस्सुगुणजलनिधिर्दर्शनद्वंद्ववार्धेः
पारं प्राप्तो यशस्वी जयति बहुतरां वाजिवक्त्रप्रसादात् ॥

जयतु सुगुणराशिर्बन्धुभिः कृष्णभूपः
जयतु विबुधवाणी पाठशालाभिरामा ।
जयतु भुवि बुधानां श्रीमतां सत्कृपातः
तुरगवदनसेवासङ्घनामातिभूमा ॥

व्याकणवेदान्तविद्वान्—एम्. लक्ष्मणाचार्यः.

# श्रीवेलापुरीय-सौम्यकेशवोत्सवमालिका

श्री महीशूरनगरविराजमान-श्रीमद्ब्रह्मतन्त्रपरकालमठ-श्रीहयवदनास्थान्यां
मूर्धाभिषिक्तैरलङ्कारमणिहार-रसास्वादिनी-रत्नप्रकाशिकादि-
शतप्रबन्धनिर्माणचातुरीधुरीणैः

**श्रीकृष्णब्रह्मतन्त्रपरकालसंयमीन्द्रैः**

पूर्वाश्रमे चतुर्विंशे वयस्येक-
स्मिन्दिनेऽनुग्रहीता

तत्करुणापाङ्गसमाधिगत-साहितीविभवेन श्रीमहीशूरपुरमहाराज-संस्कृतमहापाठ-
शालायां ज्योतिश्शास्त्रप्रधानोपाध्यायेन संस्थानमहाविदुषा
**करूरु शेषाचार्येण**
संशोधिता



मैसूरु
राजकीय शाखामुद्रालये सम्मुद्रिता
१९३९

# विषयसूचना

---

---

॥ श्रीः ॥



# श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका

प्रतिमासत्रयं प्रकटीक्रियमाणा

" कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः "

(ईशोपनिषत्)

सम्पुटम् १६] 1940 March and June विक्रम—वासन्ती-ग्रैष्मी [सञ्चिके १, २

## सुभाषितानि.

अतिदाक्षिण्ययुक्तानां शङ्कितानां पदे पदे ।
परापवादभीरूणां दूरतो यान्ति सम्पदः ॥ १ ॥

अपमानं पुरस्कृत्य मानं कृत्वा च पृष्ठतः ।
स्वार्थं समुद्धरेत्प्राज्ञः स्वार्थभ्रंशो हि मूर्खता ॥ २ ॥

देशे देशे भवने भवने तथैव भिक्षान्नम् ।
सरसि च नद्यां सलिलं शिवाश्शिव तत्वार्थवेदिनां पुंसाम् ॥ ३॥

प्रसादो निष्फलो यस्य कोपश्चापि निरर्थकः ।
नाधिकारिणमिच्छन्ति जनाः षण्डमिव स्त्रियः ॥ ४ ॥

मनीषिणः सन्ति न ते हितैषिणः
हितैषिणः सन्ति न ते मनीषिणः ।
सुहृच्च विद्वानपि दुर्लभो नृणां
यथौषधं स्वादु हितं च दुर्लभम् ॥ ५ ॥

न दातुं नोपभोक्तुं च शक्नोति कृपणः श्रियम् ।
किं तु स्पृशति हस्तेन नपुंसक इव स्त्रियम् ॥ ६ ॥

उपचारः कर्तव्यो यावदनुत्पन्नसौहृदाः पुरुषाः ।
उत्पन्नसौहृदानामुपचारः कैतवो भवति ॥ ७ ॥

सेवा सुखानां व्यसनं धनानां
याच्ञा गुणानां कुनृपः प्रजानाम् ।
प्रणष्टशीलश्च सुतः कुलानां
मूलावघातः कठिणः कुठारः ॥ ८ ॥

मरणं मङ्गलं यत्र विभूतिश्च विभूषणम् ।
कौपीनं यत्र कौशेयं सा काशी केन मीयते ॥ ९ ॥

उपभोगकातराणां पुरुषाणामर्थसंचयपराणाम् ।
कन्यामणिरिव सदने तिष्ठत्यर्थः परस्यार्थे ॥ १० ॥

अघटितघटितानि घटयति
घटितघटितानि दुर्घटीकुरुते ।
विधिरेव तानि घटयति
यानि पुमान्नैव चिन्तयति ॥ ११ ॥

———

## श्रीमद्विक्रमशुभसंवत्सरारम्भोत्सवे राजाशीर्वादपद्यावळिः

---

विप्रहस्ताब्जाकिञ्जल्ककल्पाक्षतसुवृष्टयः ।
कृष्णेन्द्र भवतो मूर्ध्नि वर्षन्त्वाचन्द्रतारकम् ॥ १ ॥

[1]आकौमारकमस्वदन्त जगते कृष्णस्य ताःकेळयः
वंशे यत्र तदन्वयात्मकलशाम्भोराशिराकाविधो! ।
पायात्त्वां शुभविक्रमाब्दतनुभृद्विक्रान्तविश्वत्रयः
दीर्घायुः प्रमुखप्रशस्तसकलश्रीवर्षणैरन्वहम् ॥ २ ॥

कनज्जी.सि.एस्.ऐ.,जि.बि.इ.युतमहास्वामिपदभृ-
त्तुरीयश्रीकृष्णप्रभुतिलक! भोजप्रभुनिभ!
सुदीर्घायुःपूर्णः विजयिजयचामेन्द्रसहितः
सुखेनाऽऽचन्द्रार्कं क्षितिमव समग्रां मनुरिव ॥ ३ ॥

वाणीभाण्डनिकेतनं समभवत्त्वद्रूप! जिह्वाञ्चलं
पद्माभाण्डनिकेतनं समभवत्त्वल्लोचनाब्जाञ्चलम् ।
सेवाभाण्डनिकेतनं समभवद्विष्णोर्भवन्मानसं
श्रीमन्कृष्णनृपाल! नाऽस्ति भुवने तुल्यस्त्वयाऽन्यःप्रभुः ॥ ४ ॥

गीर्वाणोक्तिसुधाम्बुधौ बुधगणोमन्थाचलो वासुकिः
शास्त्राणां निवहः नृपालतिलकः कृष्णप्रभुः कच्छपः ।
छात्रा मन्थकृतस्सुधा शुभमतिर्धन्वन्तरिर्वाक्पतिः
क्ष्वेळो ज्ञानफलस्पृहा गरळभुग्वीतस्पृहस्सर्ववित् ॥ ५ ॥

पराङ्कुशकलिद्विषन्मुनिपरंपरापादुका-
ब्जपीठकरहाटकीकृतनिजावदातान्तरः ।

---

1 श्रीमद्वेदान्ताचार्यकृतदशावतारस्तोत्रतस्संगृहीतः ।

निरङ्कुशखलान्तकः कलिमलार्दनः कृष्णराट्
चिरायुरवताद्धरां स्थिरमनामयस्सात्मजः ॥ ६ ॥

कृष्णेन्दो ! चामराजप्रियतनय ! दिगीशांश ! सर्वप्रजानां
चिन्तारत्न ! क्षितीन्द्रावाळिमकुटमहःपुञ्जनीराजिताङ्घ्रे ! ।
दीर्घायुस्त्वं मृकण्डोस्तनय इव महीं रत्नगर्भामवेमा-
माचन्द्रार्कं सुताद्यैर्हयहरिकृपया निस्तुलारोग्यपूर्णः ॥ ७ ॥

तत्रैविक्रमविक्रमं वितरताच्चे वत्सरो विक्रमः
कृष्णेन्दो ! जयचामराजसहितायाऽसौ नवीनश्शुभः ।
यस्मिन्नायुरनामयं तनुबलं राज्यं श्रियो बान्धवाः
सद्रत्नानि सुहृद्गणप्रभृतयः गाढं निगूढाः प्रभो ! ॥ ८ ॥

कृष्णेन्दो ! तव विक्रमं निरुपमं पूर्णायुषः श्रीमही-
विद्यामित्रसुबान्धवात्मजमुखास्तास्सम्पदो निस्तुलाः ।
श्रीकान्तो बहुविक्रमो वितरतात्त्रैविक्रमप्रक्रमो
यो यस्य व्यतरत्त्रिलोकविभवं जिष्णोः पुराऽर्घक्षणे ॥ ९ ॥

विश्वस्माद्विपुलं तदङ्घ्रियुगळं त्रैविक्रमं वर्षता-
द्वैपुल्यं स्वगतं त्वदायुषि धने राज्ये बले विक्रमे ।
आरोग्ये विहितोपभोगविभवे प्रज्ञाबले सन्तता-
वानन्दे सुहृदाद्यशेषविभव तुर्यार्यकृष्णप्रभो ! ॥ १० ॥

अब्दो विक्रम एष कृष्णनृपते त्वद्विक्रमं संश्रितः
नूनं दैशिककालिकस्वकपरिच्छेदं प्रमार्ष्टुं प्रभो !
योऽब्दो विन्ध्यमहीधरोत्तरगतिं संवत्सरैस्स्वेतरैः
योगं वा भवदीयविक्रम इवानासादितोभूद्यतः ॥ ११ ॥

त्रिविक्रमपदाब्जवद्विपुलसर्वसत्सम्पदः
नृपेन्द्र ! तव वर्षतात्सपदि विक्रमोऽब्दश्शुभः ।

यदब्दबहुविक्रमास्त्रिविधविक्रमश्श्रीपते-
स्समा इति मनीषिभिर्गणितपारगैर्घुष्यते ॥ १२ ॥

विश्वोदञ्चनसाधनानि सकलान्येको बिभर्षि प्रभो!
सत्योदञ्चनमात्रमेव भवतो व्याख्याति जैत्रध्वजः ।
तद्युक्तं समवैमि कृष्णनृपते सत्यान्वितान्यन्वहं
यत्तानि क्वचिदप्यपास्य विधृतं सत्यं न यान्त्यन्यतः ॥ १३ ॥

[1] सत्यं ब्रह्म तपोऽध्वरं बृहदृतं चोग्रं तथापीक्षणं
पुष्णन्निस्तुलभूतभाविभगवन्नानावतारेश्वरीम् ।
क्षोणीं धारय कृष्णभूधव! निजस्कन्धे जयोक्तघुल्लस-
च्चामेन्द्रादिभिरारवीन्दु कृपया सम्पत्सुतश्रीपतेः ॥ १४ ॥

कृष्णेन्दो! त्वयि शासति क्षितिमिमां मान्द्यं मरुत्यम्बुधौ
भङ्गष्षण्डरवो वने गुणहतिश्चापे मधुप्राशनम् ।
रोलम्बे कलभानने मदभरः मूर्छावचो गायने
वेणीपर्वसु जातिपातवचनं स्नेहक्षयोभ्यञ्जने ॥ १५ ॥

वर्धन्तां सुरदन्तिकल्पवरदन्त्यारोहणाद्युत्सवाः
कृष्णेन्दो वरदन्तिसुन्दरगतेस्ते निस्तुलास्सन्ततम् ।
यत्त्वं तद्धरिदन्तिशोभनमतिभक्ताग्रणीस्त्वाऽऽप्रजा-
स्सद्यः श्रीधरदन्तिसन्निभहृदस्तन्वन् सुपुष्णासिताः ॥ १६ ॥

श्रीमज्जयचामराजपक्षे—

जयचामराज! जनय प्रियं भुवः
सितचामरादिनृपलक्षभासुरः ।

---

[1] "सत्यं बृहदृतमुग्रं दीक्षा तपो ब्रह्म यज्ञः पृथिवीं धारयन्ति" इत्याथर्वण-संहितायां ।

वसुधामराक्षतबलऽप्रजानुतः
त्रिदिवामरेन्द्र इव भूपुरन्दरः ॥ १७ ॥

श्रीमत्कृष्णराजपक्षे—

जय! चामराजज! नय प्रियंभुवः
सितचामरादिनृपलक्षभासुरः ।
वसुधामराक्षतबलऽप्रजानुतः
त्रिदिवामरेन्द्र इव भूपुरन्दरः ॥ १८ ॥

(पद्येऽस्मिन् 'विक्रमहायन' इति वर्णाः पदादौ गर्भिताः)

विद्याधीशऽक्रतुघ्नाप्रियतमचरितः मध्वारिः हारिगात्रः
यज्ञेशो नम्रबन्धुस्समुचितचरितः स्वप्रकाराद्यवर्णैः ।
संवेद्येऽस्मिन्नवाब्दे प्रदिशतु रुचिरान् भूपतिभ्यः प्रजाभ्यः
धेनुभ्यो भूसुरेभ्यः सकलमनुभवेभ्यश्च भव्येप्सितार्थान् ॥१९॥

कृष्णराज! जयचामभूभुजा
सङ्गतोऽनवरतं चिरायुषा ।
ह्लादयन् भुवमिमामशेषतः
तिष्ठ पर्वतइवाऽविचाचलिः ॥ २० ॥

वाणीभाण्डगणापणात्मरसनाग्रारूढवाग्देवतो-
पास्यार्वाननपूर्णवीक्षणघनस्वाचार्यसेवाधनः ।
वाणीभाण्डनिकेतपण्डितवरः श्रीवाससद्देशिका-
चार्यः कृष्णमहीपुरन्दर! इमाः प्रायुङ्क्त पद्याशिषः ॥ २१ ॥

तिरुमले–सत्यागालं–श्रीनिवासदेशिकाचार्यः,
महाराजशारदाभाण्डागारप्रधानपण्डितः

॥ श्रीः ॥

# नव्यविक्रमवत्सरारम्भमङ्गलाशंसनम्.

---

नव्ये विक्रमवत्सरेऽत्र भवतां लोकाः सुखं निस्समं
दीर्घायुर्विपुलां श्रियं निरुपमां भक्तिं च देवे शुभाम् ।
सौहार्दं च मिथस्तनोतु जगतां नाथस्तुरङ्गाननो
वामोत्सङ्गगसिन्धुजाविलसितः कारुण्यदुग्धोदधिः ॥ १ ॥

सीमातिगकामातुरभामान्तरधामा
वामामणिकामाहितरामानुतभूमा ।
सोमाधिकधामाननभामाञ्चितधामा
सा माऽवतु भा मानुषधामा हरिनामा ॥ २ ॥

मायातिगकायाधवजायाऽभयदा या
मायारुरुकायाऽऽशरगेया निरपाया ।
पायात्सदुपेया खलहेयाऽर्कनिकाया
छाया धुतहेया मुनिजेया निरसूया ॥ ३ ॥

नीलालकजालाम्बुधिबालामणिलोला
कालाम्बुदमालासममाला मुनिपाला ।
श्रीलाऽवतु नीलाम्बरलोला शुभचेला
काला व्रजबालाऽसमलीला नुतशीला ॥ ४ ॥

श्रीमद्विक्रमवत्सरस्य नृपतिः शीतद्युतिर्नीरसा-
धीशानश्च भृगुश्चमूजलधरार्घेशो रविर्धान्यपः ।
मन्त्री सूर्यसुतो गुरुश्च रसपः श्रीकृष्णभूमीपतिं
तत्सूनुं जयचामराजनरपं चाव्यात् प्रसन्नः सदा ॥ ५ ॥

मिथोराज्यप्रेप्सुप्रबलनृपतीनां मदजुषां
भटानामन्येषां च युधि बहुधा मारणविधौ ।
प्रयातस्याब्दस्याऽधिधराणि परां विक्रमधुरा-
ममुष्याऽन्वर्थोऽऽह्वा समजनि च सा विक्रम इति ॥ ६ ॥

अब्दे विक्रमनाम्नि दर्शदिवसे चैत्रस्य मेषे गृहे
रव्यब्जाज्ञशनीज्यखेटयुतितो ज्येष्ठेऽच्छपक्षस्य च ।
सत्वाद्विश्व (१३) दिनस्य चादिमदले तूर्जस्य चान्द्रेर्ग्रहा-
द्भूपानां समरस्त्रयोदशतिथौ घोरो भवेन्नाशदः ॥ ७ ॥

अत्राब्दे सप्तमासेष्वहह शुचिमुखेष्वन्त्यपक्षेषु मार्गं
पौषं हित्वा च मासं जलधि(४)मितनभोगामियोगैर्भविष्यत् ।
दुर्भिक्षं वग्रहं च प्रकृतिषु कलहं चोरवह्न्यामयादे-
र्भीतिं चोद्बन्धनादेर्वधमखिलवपुः श्रीसहायो निरुन्धाम् ॥ ८ ॥

त्रिव्योमेभधरा (१८०३) समे शुभशके श्रीविक्रमाब्दे गते
कृष्णे फाल्गुनिके तिथा च दशमे वारे भृगोरागता ।
[२५-३-१८८१
राज्यश्रीर्महिशूरपत्तनमसौ श्रीकृष्णभूमीपतेः
संश्लिष्टाऽविरतं प्रभेव सवितुर्भूयादपाङ्गैर्हरेः ॥ ९ ॥

इत्थंज्यौतिषरत्नाभिधबिरुदः शेषसूरिकविमौलिः ।
नूतनविक्रमवत्सरभवुकाशंसनमसौ मुदाऽकार्षात् ॥

ज्योतिषरत्नं महाविद्वान्,
ऐवमावेदायिता करूरु शेषाचार्यः

॥ श्रीवेदव्यासाय नमः ॥

# नरसिंहजटालक्षणम्

---

गणनाथं प्रणम्यादौ वाणीं ब्रह्माणमेव च ।
व्यासादींश्च मुनीन्नत्वा शाकलं शैशिरं तथा ॥ १ ॥
बाभ्रव्यं क्रमकर्तारं व्याळिं नत्वा जटाविदम् ।
शौनकं च विशेषेण नत्वा गुरुपरंपराम् ॥ २ ॥
करोति नरसिंहाख्यो जटालक्षणमुत्तमम् ।
किंचिज्ज्ञेयं प्रातिशाख्यात्किंचिद्व्याकरणादिह ॥ ३ ॥
उभयानुगतं प्राय एतल्लक्षणमुच्यते ।
पारायणे संहितायां यत्फलं समुदीरितम् ॥ ४ ॥
पदस्य द्विगुणं पुण्यं क्रमस्य त्रिगुणं तथा ।
जटापारायणादेव षड्गुणं फलमुच्यते ॥ ५ ॥
पदसन्धिसमायुक्ता स्वरसन्धियुता तथा ।
या पदस्य षडावृत्तिः सा जटेत्यभिधीयते ॥ ६ ॥
क्रमोक्तपदजातं यदुत्तरं तद्द्विरभ्यसेत् ।
ततः पूर्वं द्विरभ्यस्य द्वितीये तत्समापयेत् ॥ ७ ॥
द्वितीयमुत्तरेणैवमर्धर्चान्ते समापयेत् ।
त्रिभिः पदैः क्रमो यत्र सकृदुक्त्वा तु मध्यमः ॥ ८ ॥
अन्त्यमेव द्विरभ्यस्य ततो मध्यं सकृद्वदेत् ।
ततः पूर्वं द्विरभ्यस्य मध्यमं तं सकृद्वदेत् ॥ ९ ॥
प्रत्यादानं वेष्टनं च मध्यमस्य क्रमाद्भवेत् ।
चतुःपञ्चक्रमो ह्येवं विकृतिक्रमकस्तथा ॥ १० ॥

विलोमे पदवद्ब्रूयादनुलोमे यथाक्रमम् ।
अवग्रह्यस्वरूपं तु परिग्रह्य न चान्यतः ॥ ११ ॥
क्रमवद्वेष्टनं सर्वं प्रत्यादानादिकं तथा ।
तस्यां तु पञ्चधा सन्धिरार्षपौरुषभेदतः ॥ १२ ॥
अनुक्रमव्युत्क्रमौ च तथोत्क्रमपरिक्रमौ ।
पञ्चमोऽभिक्रमश्चेति पञ्चैते सन्धयः स्मृताः ॥ १३ ॥

पौरुषोक्तं विकल्पाश्च

अभिक्रमानुक्रमयोरार्षसन्धिः प्रकीर्तिता ।
परिक्रमव्युत्क्रमयोरुत्क्रमे पौरुषः स्मृतः ॥ १४ ॥
पौरुषोक्तं विकल्पाश्च दृश्यन्ते यत्र सन्धयः ।
जानीयादिह तान्सर्वानेकरूपव्यवस्थया ॥ १५ ॥
क्वचित्तानेव संक्षिप्य वक्ष्येऽहं संहितामनुः ।
ओकारस्याप्रगृह्यस्यानौष्ठ्यान्यस्वरे परे ॥ १६ ॥
[1]अकारस्य वकारस्यादोष्ठ्येकारस्य न त्विति ।
एकारस्याप्रगृह्यस्य आकारादिस्वरे परे ॥ १७ ॥
[2]अकार एव तस्य स्यात्प्रगृह्ये प्रकृतिस्तथा ।
ऐकारस्य तथाकारस्वरेषु परतो यदि ॥ १८ ॥
[3]औकारस्य तथानौष्ठ्य आकार एव परे स्वरे ।
आकार एव तस्यौष्ठ्ये प्रकृह्ये प्रकृतिस्तथा ॥ १९ ॥
[4]इकारादिस्वराणां च ऋकारे परतः स्थिते ।
सन्धिं कुर्वन्ति सर्वत्र न त्वकारस्य कुत्रचित् ॥ २० ॥

---

[1]सुसुम हि ते इन्द्र, सुषुमाहित इन्द्र—ऋ. प्रा. २ प सू. १० । [2]ते इति इत् विप्राः, ते इद्विप्राः । [3]मेघऽसा तौ अग्ने, मेघसातावग्ने—ऋ. प्रा. २ प. सू. ११ । [4]. प्र. कृतानि-ऋजीषिणः, प्रकृतान्यृजीषिणः ।

[1] आकारस्य च ह्रस्वः स्यादिकारे परतः स्थिते ।
उकारस्याप्यपृक्तस्य सर्वत्र प्रकृतिर्भवेत् ॥ २१ ॥
द्विरुक्तिरपि तस्य स्यादर्धर्चाद्यन्तगो यदि ।
प्रगृह्याणां च पूर्वेण सन्धिर्न परतः क्वचित् ॥ २२ ॥
[2] त्र्यक्षरान्तप्रगृह्याणामिवशब्दे परे स्थिते ।
अनुलोमे विलोमे च सन्धिः स्यान्नपरिग्रहे ॥ २३ ॥
[3] सानुनासिकमाकारमनुलोमे तथा वदेत् ।
विलोमे नानुनासिक्यं प्रकृतं तस्य कुत्रचित् ॥ २४ ॥
आकारान्तोपसर्गस्य ऋकारादौ क्रियापदे ।
परे वृद्धिं प्रकुर्वीत विलोमे तु न कुत्रचित् ॥ २५ ॥
[4] आकारान्तोपसर्गस्य एकारादौ क्रियापदे ।
तयोरेकार एव स्यादोकारादौ तथैव च ॥ २६ ॥
इकारोकारयोश्चापि स्वरमात्रे परस्थिते ।
सन्धिं कुर्वीत सर्वत्र प्रगृह्याणां न कुत्रचित् ॥ २७ ॥
[5] छकारे द्वित्वमाप्नोति दीर्घाद्ध्रस्वात्परस्थितः ।
नटयोः से परे मध्ये तकार उपजायते ॥ २८ ॥
[6] ङकारात्परतः कः स्याच्छषसेषु परेषु च ।
स्पर्शानां पञ्चमपरे पञ्चमश्च स्ववर्गजः ॥ २९ ॥
[7] पदान्तस्य मकारस्य स्पर्शे वा यवले परे ।
स्पर्शे तत्पञ्चमं वर्णां यवले यवलाः क्रमात् ॥ ३० ॥

---

[1] विश्वा-ऋतेन, विश्वऋतेन । [2] दम्पतीव क्रतुविदा, दम्पती इवेति, दम्पती-ऽइव ऋ. प्रा. प. २. सू. २७. [3] दावने आ अच्छ-दावन आँ अच्छाच्छ दावने [4] कामं आ इत्य काममेत्येत्य । [5] त्वन्तान्त्सञ्च-त्वं तान् सं च । [6] प्रत्यङ् सः— प्रत्यङ् क् सः, ऋः प्रा. प. ४. सू. १६. [7] त्वं कुत्संत्वङ् कुत्सम् । अहं च त्वं च, अहञ्च त्वञ्च। त्वं तान् इन्द्र-त्वन्ताँ इन्द्र यं युञ्जन्ति यं य्युञ्जन्ति ऋ. प्रा. प. ४. सू. ६-७॥

पदान्तस्य मकारस्य हकारे यवलैर्युते ।
परे तस्य त एव स्युर्नकारेऽपि तथैव च ॥ ३१ ॥
[1] पदान्तस्य नकारस्य शकारे परतःस्थिते ।
ञकारः स्यान्नकारस्य चच्छतस्तस्य सर्वतः ॥ ३२ ॥
[2] स्वरोऽनुनासिकान्तस्थापरशस्पर्शपूर्वतः ।
नित्यं छत्वमवाप्नोति नानुनासिकपूर्वकः ॥ ३३ ॥
[3] अपञ्चमानां स्पर्शानां हकारे परतः स्थिते ।
स्वचते हकारस्य तत्पूर्वस्याप्युपोत्तमः ॥ ३४ ॥
नृनित्यस्य नकारस्य नित्यं रुन्वादिपे परे ।
यत्र प्राप्तिः पौरुषस्य तत्रार्षं सन्धिमाश्रयेत् ॥ ३५ ॥
अकारान्तविसर्गस्य ह्रस्वाकारे परे स्थिते ।
ओकारः स्यात्रयाणां च रु(रि)फितस्य न कुत्रचित् ॥ ३६ ॥
[4] अकारान्तविसर्गस्य आकारादौ स्वरे परे ।
तस्याकारः सोपधस्य न सन्धीरिफितान्यतः ॥ ३७ ॥
[5] स इत्यस्य तथा लोपो व्यञ्जने परतो यदि ।
अकारान्तविसर्गस्य घोषवर्णे परे स्थिते ॥ ३८ ॥
[6] ओकारः स्यात्सोपधस्य रिफितस्य न कुत्रचित् ।
आकारान्तविसर्गस्य स्वरघोषे परे यदि ॥ ३९ ॥
[7] आकारः स्यात्सोपधस्य न सन्धिरिफितान्यतः ।
नानिपूर्वोपसर्गस्य सर्वत्र रु(रि)फितस्य च ॥ ४० ॥

---

[1] मघवन्-शग्धि, मघवञ्छग्धि । [2] तत्-शंयोः-सुम्नं, तच्छंयोस्सुम्नम् । [3] अवाट्-हव्यानि, अवाड्ढव्यानि ऋ. प्रा. प. ४ सू. ५. [4] यः इन्द्र य इन्द्र । अन्तः इच्छन्ति-अन्तारिच्छन्ति । [5] सः-समुद्रः, स समुद्रः । [6] देवयन्तः यथा, देवयन्तो यथा । [7] सूर्यायाः भद्रं, सूर्याया भद्रम् ॥

[1]स्वरघोषपरे वापि रेफः स्यात्तस्य सर्वतः ।
रु(रि)फितस्य विसर्गस्य लोपो रेफे परे सति ॥ ४१ ॥
[2]पूर्वस्वरस्य दीर्घः स्याद्दवर्णान्यस्य सर्वतः ।
पदान्तस्य विसर्गस्य शषसेषु परेषु च ॥ ४२ ॥
[3]क्रमात्तस्य त एव स्युर्जटायां सर्वतः स्थिताः ।
स्वरमध्यस्थडढयोर्ळत्वं ळ्हत्वं च सर्वतः ॥ ४३ ॥
विलोम एतदन्यत्र सन्धिर्व्याकरणादिह ।
अनुलोमे प्रातिशाख्यात्तत्र तत्र विचारयेत् ॥ ४४ ॥
संहिताभिर्न रूपाणि यानि सन्ति पदे क्वचित् ।
विलोमे पदवद्ब्रूयादनुलोमे यथाक्रमम् ॥ ४५ ॥
स्वपदस्थविकारोऽर्थविकारो यत्र दृश्यते ।
पदवत्संहितावच्च तत्रान्यत्पदवद्भवेत् ॥ ४६ ॥
ह्रस्वभाजां तु सर्वेषां ह्रस्वता व्युत्क्रमादिषु ।
अनुक्रमाभिक्रमयोर्दीर्घ एवात्र सर्वतः ॥ ४७ ॥
प्लुतिभाजां प्लुतिस्तेषामनुलोमविलोमयोः ।
रेफलोपोष्मभावश्च नस्य यत्र प्रदृश्यते ॥ ४८ ॥
तत्सर्वमनुलोमे तु विलोमे न त्वघाविधिः ।
द्वित्वागमानुस्वारादि लोपादेशागमादिकान् ॥ ४९ ॥
आर्षपौरुषवत्सर्वमनुलोमविलोमयोः ।
विवृत्त्यभिनिधानादिस्वरभक्तियमा अपि ॥ ५० ॥
स्वरास्तत्सन्धयः कम्पा उभयत्र समाः स्मृताः ।
प्रगृह्यरङ्गा आर्षोक्ताः पदान्तेषु न मध्यतः ॥ ५१ ॥

---

[1] विप्रेभिः—आसया, विप्रेभिरासया । [2] प्रातः रत्नं, प्रातारत्नम् । [3] यः—वः—शिवतमः, यो वश्शिवतमः । यः—समुद्रा, यस्समुद्रा—ऋ. प्रा. प. ४ सू. ३३ । वीळु—अङ्गं, वीड्वङ्गम्—ऋ. प्रा. प. १ सू. ११ ॥

परदान्यार्षवर्णानि पौरुषेऽपि (वि) तथा भवेत् ।
तत्सन्धिमुभयत्रापि जटायां सर्वसंमतः ॥ ५२ ॥
क्रमकाले क्रमस्थस्य यत्र यत्र परिग्रहः ।
तत्र तस्य पदस्यापि परिग्रहमिहाचरेत् ॥ ५३ ॥
पदान्यनुक्रमे यानि तथा हि (भि)क्रम एव च ।
प्रातिशाख्यानुसारेण सन्धिं तत्र विचारयेत् ॥ ५४ ॥
परिक्रमव्युत्क्रयोरुत्क्रमे ये च सन्धयः ।
सर्वान्व्याकरणादेव सन्धिं तत्र वदेद्बुधः ॥ ५५ ॥
कुत्रचित्स्वरवर्णाभ्यां यद्यभेदः पदद्वये ।
तत्र सान्धिरेव स्यान्नवदेत्पौरुषादितः ॥ ५६ ॥
समयं क्रमवद्ब्रूयाज्जटायां सकृदेव हि ।
आदिमध्यान्तसर्वाख्य समयस्तु चतुर्विधः ॥ ५७ ॥
तत्सर्वस्य जटारूपं प्रवदन्ति जटाविदः ।
यद्यादौ समयं शुद्धे संगृह्णीयात्पदद्वयम् ॥ ५८ ॥
आदिमध्ये तु पूर्वेण समयादिपदं वदेत् ।
मध्ये चैकं पदं शुद्धं परेणावर्तयेत्तदा ॥ ५९ ॥
यद्यन्ते समयं पूर्वं पदं शुद्धेन वर्जयेत् ।
एकमेव पदं शुद्धमर्धर्चान्ते तदेव हि ॥ ६० ॥
द्विरभ्यस्य विरम्याथ क्रमवद्वेष्टनं पुनः ।
नास्ति चेत्परतः शुद्धं समयान्तं समापयेत् ॥ ६१ ॥
उपलेखादिभिर्ग्रन्थैर्विशेषो यत्र दृश्यते ।
ततस्ततः समादाय वक्तव्या विबुधैर्जटा ॥ ६२ ॥
विकल्पकौमुदीसेयं जटया सहिताश्रया ।
नरसिंहेन रचिता सन्धिसन्देहनाशिनी ॥ ६३ ॥

इति नरसिंहजटालक्षणं समाप्तम् ॥

---

## श्रीयुवराजकण्ठीरवनरसिंहराजचरमश्लोकावलिः

अस्मिन्नब्दे प्रमाथिन्यथ खरकिरणे कुम्भयाते तपस्ये
मासे शुक्ले च पक्षे कमलभवतिथावर्कवारे च पौष्णे ।
आत्रेयः श्रीनृसिंहप्रभुवरयुवराट् संययौ नाकलोकं
कृष्णक्ष्मेशानुजोऽयं कुविधिविलसितेनात्मजादिप्रजानाम् ॥ १ ॥

जज्ञेऽसौ शिवनागभू (१८११) समशके श्रीसर्वधार्यब्दके
वैशाखे च दळेऽपरे हरिदिने कौजे दिने चाश्विभे ।
श्रीचामावनिपद्वितीयतनयो वाणीविलासेश्वरी-
गर्भाब्धौ क्रमशोऽखिलाः कुशलधीर्भेजे सुधीभ्यः कलाः ॥ २ ॥

धीरोऽयं सदसि प्रगल्भवचनः सर्वोपगम्यः प्रजा-
क्षेमाधानचणः समानधिषणः सद्यौवराज्योपगः ।
कृष्णक्ष्मेशितुरन्तरङ्गसचिवो भूत्वा व्यधात्कानिचि-
द्राज्याभ्युच्चयसाधकानि पटुधीः कर्माणि शौर्याकरः ॥ ३ ॥

मन्वङ्केन्दु (१९१४) समानहूणशकतो जातं चतुर्वत्सरैः.
सङ्ग्रामं महिशूरनामनगरादासेदुषामुत्तमम् ।
योधानां बहुधा सहायममितं कर्तुं प्रजावत्सलः
सोऽयं कोशगृहं ततान किमपि श्रीमन्नृसिंहप्रभुः ॥ ४ ॥

पाश्चात्याखिलदेशविश्रुततमः सर्वंसहाविश्रुत-
श्रीमद्वान्धिमनीषिनिस्पृहमणिप्रेमालयोऽयं नृपः ।
तेने सर्वजनानुकूल्यमधिकं हृष्टो नृसिंहप्रभु-
स्तस्यास्याः परमोपकारसुमतेर्मूलं कृपा वाक्पतेः ॥ ५ ॥

पारेसिन्धुलसन्मनोज्ञविषयव्राताटनोत्तम्भित-
प्रज्ञो दुर्गतवर्गपालनपरः कर्णाटभाग्योच्चयः ।
नानादेशजलोकशीलसुनयाभिज्ञो नृसिंहप्रभु-
र्नाकं प्रापदिति प्रजा वयममी शोकाब्धिमग्ना भृशम् ॥ ६ ॥
ईदृक्षाद्भुतवस्तुनः प्रविरहाज्जातामसह्यां शुचं
सोढुं कृष्णमहीक्षितः सजयचामेशस्य शक्तिं पराम् ।
दत्वा सौख्यमनामयं बहुतरं चायुर्विधत्तां रमा-
बाहाऽऽश्लिष्टशिरोधरस्त्रिभुवनाधीशस्तुरङ्गाननः ॥ ७ ॥
इत्थं ज्यौतिषरत्नं संस्थानमहाबुधः कविश्शेषः ।
युवराजनृसिंहविभोश्चरमश्लोकावळिं शुचा व्यतनोत् ॥

एवमावेदयिता,
ज्यौतिषरत्नं, करूरु शेषाचार्यः.

॥ श्रीः ॥

विजयतां भगवान् हयाननः.

# * श्रीकृष्णसार्वभौमाभिनन्दनपद्यमाला.

---

विधत्तां श्रीकृष्णक्षितिपतिमणेर्भावुकततिं
विकम्पां साम्राज्यश्रियमविकलां सज्जनरतिम् ।
वपुर्दार्ढ्यं सौख्यप्रचुरविपुलायुश्च जगता-
मधीशो वागीशः शिशिरकरधामा गुणनिधिः ॥ १ ॥

श्रीकृष्णक्षितिपाल तेऽन्नजरसैः कालाद्बहोरेधिता-
सृङ्मेदोस्थिपलोऽस्मि पञ्चदशकेऽब्देऽमूं पुरीमागमम् ।
भास्वत्यत्र पुरे वरेऽमरकलागेहेऽत्र मत्पूर्वजात्
ज्योतिस्तन्त्रमुपागमं कविवराद्गोपालसूरेरहम् ॥ २ ॥

कालस्य क्रमतोऽगमं नृपमणे छात्रान् समध्यापयन्
ज्योतिश्शास्त्रमहोपदेशकपदं सम्प्रत्यविन्दं परम् ।
स्तुत्यं 'ज्यौतिषरत्न' नाम बिरुदं ख्यातेरमुष्याः परो
हेतुस्तावककैतवातिगकृपापाङ्गामृतस्नापनम् ॥ ३ ॥

ईदृश्याः सदृशीमहं बहुमतेरन्यामलब्ध्वोपदां
श्रीकृष्णक्षितिनाथ तत्प्रतिनिधिं कार्तज्ञ्यमेवार्पये ।

---

* प्रमाथिवत्सराश्वयुजशुक्लैकादश्यां (२३-१०-१९३९) प्रवर्तितायां नवरात्र-महोत्सवाङ्गभूतायां राजसभायां श्रीमहीशूरपुरमहाराजकरुणापाङ्गसमासादित "ज्यौतिषरत्न" बिरुदेन करूरु शेषाचार्येण कार्तज्ञ्यप्रदर्शनाय विरचिता तत्पुरतोऽत्रदिने (१९-१२-१९३९) परिपठिताचेयम्.

अद्य त्वत्सविधे रवेस्त्रिजगतामुज्जीवनं कुर्वतः
किं सन्ध्यात्रितयेऽन्वहं न ददति ह्यर्घ्यं द्विजा भक्तितः॥४॥

भेदात् कालस्य भिन्नस्वगतिभिरधुना स्वस्ववृत्तैर्व्रजद्भिः
खेटैर्भैः क्रान्तिवृत्ताद्यमधनदादिशोर्व्यस्तबाणैश्च भूमेः ।
ऊर्ध्वं चाधोऽभितश्च प्रतिदिवसमसौ व्यस्तयाच स्वगत्या
गच्छन्नारोग्यमर्को दिशतु घृणिनिधिः कृष्णभूपालमौलेः॥५॥

एवं कृष्णमहीपतिर्नवनिशारम्योत्सवे धीमतां
तन्वानः प्रतिवत्सरं बहुमतीः शास्त्राणि संवर्धयन् ।
संपूर्णामृतरश्मिराश्मिभिरिवोदन्वान् समुज्जृम्भतां
नीरोगः सुचिरं प्रशास्तु च महीं शौरेः कृपापाङ्गितैः ॥ ६ ॥

इत्थं 'ज्यौतिषरत्ना'भिधबिरुदः शेषसूरिकविमौलिः ।
चक्रेऽभिनन्दनमिदं श्रीकृष्णमहीशितुः प्रहृष्टमनाः ॥ ७ ॥

ज्यौतिषरत्नम्—करूरु शेषाचार्यः.

## * श्रीमज्जयचामराजमङ्गलाशंसनपञ्चरत्नम् .

---

जयचामराजनृपते भुवकं ते
निरुपप्लवं विपुलमायुरुदाराम् ।
श्रियमात्मजोद्भवसुखं च विधत्तां
दृढदारसौख्यमनघो रमासखः ॥ १ ॥

प्रजासु समतामतिं बुधगणे च देवे गुरौ
विनीतिममितां दयां स्ववियुतेषु मैत्रीं पराम् ।
सुहृत्सु भयवारणं भययुतेषु कुर्वंश्चिरं
विराजतु धरातले च जयचामराजो विभुः ॥ २ ॥

निजजनपदयोगक्षेमचिन्तैकचित्तः
स्वपरविषयलोकत्राणरीतिप्रजज्ञः ।
विदितनृपतिनीतिः सत्कृपाभाजनं त्वं
सकलविनुतकीर्तिं याहि चामावनीश ॥ ३ ॥

देशायव्ययवर्धनापचयनस्वान्ताः प्रियोक्तिः स्मर-
क्रोधोत्थव्यसनप्रहीणधिषणः कालप्रबुद्धः सदा ।
दण्ड्यादण्ड्यमतिर्मनूदितकरादाता सतां वत्सलो
विद्यावर्धनकौतुकश्च जयचामेश प्रशाधि प्रजाः ॥ ४ ॥

---

* महाविदुषा करूरुशेषाचार्येण तादृशबिरुदाधिगमप्रमोदोदन्तनिवेदनाय प्रणीतं राजकुमारसविधेऽस्मिन् दिवसे (४-१२-१९३९) पठितं च.

रोहिण्येव सुधकरो गिरिजया शर्वो यथा भाषया
धातेवाम्बुधिजातया हरिरिव ब्रघ्नो यथा छायया ।
शच्या देवपतिर्यथा दयितया स्वस्यावनौ राजतां
सत्यप्रेमकुमारिकाप्रियतमः श्रीचामराजो विभुः ॥ ५ ॥

इत्थं कृष्णक्षितिपास्थानमहापण्डितः कविः शेषः ।
ज्यौतिषरत्नं प्रोचे भव्यं जयचामराजनृपमौलेः ॥ ६ ॥

ज्योतिषरत्नं— करूरु शेषाचार्याः.

॥ श्रीः ॥

# विमर्शः

"पटनाकालेज्" नाम्नि महाविद्यालये व्याकरणशास्त्रप्रधानाध्यापकैः पण्डितप्रकाण्डैः श्रीहरिशङ्करशर्मपाण्डेयैर्गुम्फितं पाणिनीयमाहात्म्यमापादचूडं व्यमार्शि । सहस्रफणामणिमण्डितस्य साक्षादादिशेषस्यापरावतारभूतैः श्रीमद्भिर्भगवद्भिः पतञ्जलिमहर्षिभिरपि वर्णयितुमशक्यं श्रीमदाचार्यपादानां पाणिन्याचार्याणां माहात्म्यं महाकविश्रीकालिदासप्रदर्शितां "मन्दः कवियशःप्रार्थी" इत्येवमादिकां रीतिमनुसृत्य वर्णयितुमेषां प्रवृत्तिरतीव प्रशंसनीया ॥

आक्षरसमाम्नायिकानामनुबन्धानां पाणिनिकृतत्वप्रत्यादेशपुरस्सरं नागेशदीक्षितैर्महेश्वरकृतत्वे प्रसाधितेऽपि तेषां पाणिनिकृतत्वमभिप्रयन्तस्तद्द्वारा पाणिन्याश्रितप्रत्याहारादिलघूपायविशेषं क्रमविशेषाङ्गीकारेणानुवृत्त्यादिसौकर्यातिशयं च प्रचिख्यापयिषवस्त्वेतेऽतीव प्रमाणान्तरान्वेषणव्यग्रमानसा इति व्यक्तीभविष्यति । आधुनिकप्रपञ्चमलङ्कुर्वतां वैयाकरणान्तेवासिनामतीव सौकर्यमुत्पिपादयिषवः पाणिन्याचार्याः कस्मिन् कस्मिन् अध्याये कांस्कान् विषयान्समगृह्णन्निति विवरणं चैषां विद्यार्थिविषये वर्तमानामनुग्रहपरिपाटीमाटीकते ॥

पाणिनिसूत्रानुपूर्व्याः पदव्यत्यासप्रत्याख्यानादिभिरुत्पत्स्यमानानदोषाणां निराकरणसमये पाणिन्यसम्मतलक्ष्याणां साधुत्वसम्पादनासमये च पतञ्जलिमहर्षिभिरन्यैरर्वाचीनैश्चाभिधीयमानमपाणिनीयत्वमेते प्राकृतविद्यार्थिसौलभ्याय पाणिन्याश्रितक्रमविशेषस्य विपर्यासेऽप्यभिप्रयन्तः भट्टोजिदीक्षितकृतिं बहुधा विनिन्द्य पाणिनीयक्रमानुसारेण सूत्रव्याख्यानपरिशीलितं स्वकीयं पाणिनीयं व्याकरणमतिशयेनाभिष्टुवन्ती

त्येतदापातत आत्मश्लाघावहमिति भ्रान्तिमुत्पादयदपि नवीनपाणिनीय-ग्रन्थप्रचारणमात्रपरत्वान्न दोषावहम्; न हि प्रायशोऽस्मिन् प्रपञ्चे प्राचीनानां निराकरणं नवीनानां गुणातिशयपरिपूर्णत्वप्रतिपादनं च विना नूतनानामुत्कर्षस्समुपजायते! आधुनिकानां व्याकरणशास्त्रपरिच-यादिविषये दीक्षिताश्रितक्रम आहोस्विदेतदीयः परमसौकर्याधायक इत्येतदेतदीयग्रन्थपरिशीलनानन्तरमेव व्यवस्थापयितुं पार्यते ॥

किं बहुना; पाणिन्यादृतक्रमविशेषस्वारस्याभिमानशालिनामेतेषां सरससहृदयहृदयाह्लादिकया सुलभशैल्या विरचितमिदं पाणिनीयमाहा-त्म्यमेतेषां साहित्यव्याकरणशास्त्रयोः प्रतिभोत्कर्षमतीव प्रकाशयति। एवमेवाभिनवरीतिमनुरुन्धानाश्चैते शब्दशास्त्रमतीवप्रख्यापयन्तः इतोप्य-तिशयेन ग्रन्थानारचय्य लोकोपकारमनिशमातन्वन्तीत्यहं सुदृढं विश्व-सिमि ॥

साहित्यव्याकरणविद्वान् तिरुमले सत्यागालम्,
कृष्णदेशिकाचार्यः

# कुळकम्.

---

घटोऽहं भूतले जातः कम्बुग्रीवादिमानपि ।
कपालद्वयसंयोगी कुलालेनातियत्नतः ॥ १ ॥
पावकात् पारिशुद्धयं च सौख्यं लब्ध्वाऽन्यदुर्लभम् ।
इत्थंभूते मयिह्येतत् व्यसनं समुपागमत् ॥ २ ॥
कोऽबध्नाद्यमराट्पाशमिदं मरणसूचकम् ।
कण्ठे मदीये पिशुनः निर्दयः पुरुषाधमः ॥ ३ ॥
पातितोऽस्मि नृशंसेन कूपेऽत्यन्धेऽतिदुर्गमे ।
नीचमार्गे प्रयातस्य निरालम्बस्य मे महान् ॥ ४ ॥
अवलम्बस्स एवासीत् कण्ठपाशोऽति दुःखदः ।
पार्श्वस्थैरुपलैस्तीक्ष्णैर्वेपमानवपुः पुनः ॥ ५ ॥
अहो पतितवानस्मि पाहि मां करुणानिधे ।
निमग्नं सलिलेऽगाधे म्रियमाणं जनं त्विति ॥ ६ ॥
ध्वनिच्छलेन रुदतः कुत्र मे रिक्तता गता ।
गुरुत्वं प्राप्य सहसा कृपया परमात्मनः ॥ ७ ॥
धृत्वा जीवनमापूर्णमुद्धृतोऽहं पुनस्ततः ।
तस्यैव जीवनं दातुं येनाहं पातितः पुरा ॥ ८ ॥
घटाष्टकमिदं पुण्यं यः पठेच्छ्रद्धया नरः ।
परोपकारस्य परां काष्ठां तत्फलमश्नुते ॥ ९ ॥

गोपालाचार्यः,
अध्यापकः, चामराजनगरम्.

# विषयसूचना

---



---

## सम्पादकीयसमितिः

---

१. श्रीमन्तः अर्थशास्त्रविशारदाः विद्यालङ्काराः महामहोपाध्यायाः डाक्टर् आर्. शामशास्त्रिणः, बि.ए., पि.एच्.डि., एं.आर्.ए.एस्., विश्रान्त मैसूरु प्राच्यकोशागाराध्यक्षाः शासन-विमर्शशाखाध्यक्षाश्च

२. श्रीमन्तः प्रोफेसर् सि. आर्. नरसिंहशास्त्रिणः, एम्.ए., मैसूरु महाराजाकालेज् संस्कृत प्रधानोपाध्यायाः

३. पण्डितरत्नं, धर्माधिकारिणः ब्र. श्री. काशी शेषवेङ्कटाचल-शास्त्रिणः

४. साहित्यरत्नं, महाविद्वांसः ब्र. श्री. क. गोपालकृष्णशास्त्रिणः विश्रान्त महाराजाकालेज् संस्कृत पण्डिताः

५. ज्यौतिषरत्नं, महाविद्वांसः ब्र. श्री. करूरु शेषाचार्याः, महा-पाठशाला ज्यौतिषप्रधानोपाध्यायाः

६. विद्वांसः ब्र. श्री. एस्. वेङ्कटाचार्याः, महापाठशाला साहित्य-प्रधानोपाध्यायाः

७. श्रीमन्तः एस्. वि. कृष्णमूर्तयः, एम्.ए., महापाठशालाध्यक्षाः (सम्पादकाश्च)

---

॥ श्रीः ॥



# श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका

प्रतिमासत्रयं प्रकटीक्रियमाणा

" कुर्वन्नेवेह कर्माणि जिजीविषेच्छतँ समाः "

(ईशोपनिषत्)

सम्पुटम् १६]    1940–Sept : विक्रमः-शारदी    [सञ्चिका २

## श्रीमन्नाल्वडिकृष्णराजेन्द्रमहाराजनिर्वाणम्

[१]

हा हन्त दुर्विधेर्दुश्चेष्टितप्रसरः

इदमिह प्रियपाठकमहाशयेषु सविषादमावेद्यते ।

अयि पाठकमहाशयाः—प्रथिततमो हि महीशूराभिधानो विषयः, यं शासतो महाराजाः मूर्तिमन्ति सत्यानि, शरीरिण्यो धर्म-

चर्याः, सविग्रहा लोकमर्यादाः, अवतारा देवतानां, देहिन्यो भक्तयश्चामुण्डिकायाः, भूषणानि भूविलासिन्याः, अवलम्बनान्यपरिमितपुण्यपुञ्जानाम् । किंबहुना, सर्वदेवशक्तिसमूहात्मिका जगन्माता तद्रक्षणायाचलतास्तिष्ठति । ये च पुनरिहासन्ननेके राजान एवंगुणाः न तेऽस्मद्दृष्टिपथं गताः । यः पुनराटीकतास्मद्दृष्टिपथं श्रीमन्नाल्वाडिकृष्णराजमहाप्रभुः, नास्य शासनधोरणीं बंहिष्ठं गुणपूगं वा यथावद्वर्णयितुमीश्महे । निधानं ह्येष धर्माणां, यतस्सनातनधर्मं वधर्यति स्म । विधानं च प्रजामुदः परकाष्ठायाः, यतोऽपक्षपातमखिलप्रजाजीविकाप्रदाः बह्वीर्यन्त्रशाला निरमापयत् । प्रधानं पुनः शासतां राज्ञां, यतो मानवीः शासनपद्धतीर्न मात्रयाप्यत्यैत् । अतो नु खल्वेषोऽमलकीर्तिपरिधानः, धर्मरक्षातोषितांबिकात्तस्वान्तप्रसाद इति तन्निहितसमाधानश्च, अतएव तिरोधानं शिवेतरगुणानां, आधानं चाश्रितकामानाम् ॥

अहो बत नातः परं वज्रपातमकरुणस्य विधेर्व्यवहर्तुं पारयामः । नूनं स विधिः पुरंदरयितुमेवाददीदृशमस्मद्भाग्यपुञ्जं वैक्रमाषाढवदि १५ । यत्कारणमतिरमणीयमर्थमखिलं नाकार्हं मन्यते । अथवा श्रीरामभरतयोरिवाव्याजसौभ्रात्रं दर्शयन्नेवैष नः प्रभुः प्रमाथिमाघ वदि १० दिवसे दिवं गतं भ्रातरं नरसिंहराजं स्मारं स्मारं तमन्वसार्षीत् ॥ सर्वथापि वञ्चिताः सुदूरं राष्ट्रियाः प्रकृतयः । हा हन्त क्व नु नस्तत्तादृक्षं भाग्यजातं, येन बहुकालमस्य कमनीयगुणाकरस्य वशे तिष्ठेम । हा समलोकमित्र, हा वसुधाकुटुम्बक, हा चामुण्डाभक्तिसन्तते, हा धर्मनर्ममित्र न तेस्ति कोपलेशः, कुतोऽस्मत्तस्तिरोधत्से, बंहीयान् हि त्वयि नो बहुमानः, गरीयो गौरवं, विशिष्टो विश्वासः, प्रभूतश्च प्रश्रयः, नातः सर्वथापि ते नो हातुमवकाशते । अथवा विधिलिपिरशक्यमार्जनेति नो दौर्भाग्यमेव दर्शंदर्शं तूष्णीमास्महे ॥

# चरमश्लोकावलिः

ननु मान्य भवादृशः क्षितौ न हि कोप्यस्ति शपामि सत्यतः ।
यतसे जनमंगलाशया निजभोगान् परिहाय यत् सदा ॥ १ ॥
समतामखिलेषु सर्वदा निजपोष्येषु विधाय शास्त्रिताम् ।
निखिलं नृपकृत्यमाचरन् कथमन्यैर्नृप तोल्यसे जनैः ? ॥ २ ॥
भगवानखिलेष्टसिद्धये विविधं रूपमुपैति सर्वदा ।
इतिशास्त्रिततत्त्ववित् भवान् जिनयेश्वादिमतावलम्बिनाम् ॥ ३ ॥
विषये वसतामपेक्षया बहुदेवालयमातनोन्ननु ? ।
पठतामपि साह्यमातनोत् बहुवित्तैः सुतनिर्विशेषतः ॥ ४॥
विविधा अपि यन्त्रशालिकाः वितताः पश्चिमदेशवन्ननु ? ।
बहवो ह्यधनाः श्रिताइमाः सुखतो जीवनमाप्नुवन्त्यहो ॥ ५ ॥
वसतीः सुखदाः भवान् बह्वीः रमणीयाः कति नातनोत् भुवि ? ।
विरला मरुतां प्रचारदाः विरुजा यासु वसन्ति मानवाः ॥ ६ ॥
अधिपत्तनमप्यनेकतः सुमवाट्यः शतशो विनिर्मिताः ।
शिशवस्तरुणाः श्रमातुराः विहरन्त्यत्र मनो विनन्दितुम् ॥ ७ ॥
सरितः कृतकाः बहूदकाः कति नाकारिषतेह येन भूः ? ।
मरुभी रहिता सुसस्यदा परितो भाति विराटभूरिव ॥ ८ ॥
अनया विधया सुखेन यत् भवता नाथ सुकामरंजिताः ।
तदिमा अखिलाः प्रजाः समं कृतविज्ञाः हृदयैः सुतापितैः ॥ ९ ॥
भगवन्तमजस्रमादरात् प्रयजामोऽङ्ग तदेहि पश्य नः ।
बहुधा यजनं कदर्थयन् कथमीशोपि दयालुरुच्यताम् ? ॥ १० ॥
भगवद्भजनं वृथैव चेत् ननु शास्त्रं च तथेति गण्यताम् ।
कलिकालमहादवैरिह श्रुतिधर्माख्यतृणेषु सर्वतः ॥ ११ ॥
नवनागरकाभिमानिभिः क्रियमाणेषु विषह्य भस्मसात् ।
उररीकृतधर्मरक्षणः ननु कृष्णोसि पृथासुबान्धवः ॥ १२ ॥

न हि ते विषये विहन्यते क्वचिदप्यार्य वृषस्य रक्षणम् ।
इति केवलमेव नापितु प्रचयं गच्छति पूर्वपूर्वतः ॥ १३ ॥
धृतिभिर्नियमैर्भृतस्त्वया क्व नु धर्मोयमगादरक्षया ? ।
अवतादवितारमित्यसौ ननु लुप्तो विधिरत्र धर्मगः ॥ १४ ॥
अयि दुष्टविधे कुचेष्टित प्रहृतं मर्मणि धर्मचारिणाम् ।
यदयं मनुजेशधार्मिकः बत कृष्णस्तरसापहारितः ॥ १५ ॥
कति वा न हि सन्ति भूतले ननु कुक्षिंभरयः श्ववृत्तयः ।
वृषसेतुविभेदका दृढं मदमोहादिपराश्रया जनाः ॥ १६ ॥
किमु संहरणे रुचिस्ततो जहि दुष्टान् नतुराजसन्मणिम् ।
अयि धन्य कुतोसि निद्रितः ? त्वरितं बोधमवाप्य पश्य नः ॥ १७ ॥
न हि ते मुखतोऽपयाति भाः करुणाद्रात् शममुख्यवारिधेः ।
चरमां विकृतिं विहाय भोः क्व नु संस्था प्रथते महीतले ? ॥ १८ ॥
अथवा निभृतं परांबिकां कुलदेवीं ननु चिन्तयन् भवान् ।
परिहातुमनाः कलेबरं ? न तु युक्तं श्रितहानतस्त्विदम् ॥ १९ ॥
अयि वेंकटशैलवासक श्रितबन्धो तव पादपंकजे ।
बहुशः शरणप्रपातिनं कृपया पाहि न आत्मतोऽधिकम् ॥ २० ॥
नृपकृष्णमणिं सुतर्पितान् तनुतेऽहर्निशमन्नदानतः ।
तवशैलमुपेयुषो द्विजान् तवरूपेण विदान् य आश्रवः ॥ २१ ॥
अखिलांडकनायिकाप्रिय श्रितजंबूतरुमूल शंकर ।
महतो विभवात् भवानिव प्रियताटंकपति र्हि नः प्रभुः ॥ २२ ॥
विषमं कथमत्र कल्पितं प्रियताटंकवियोजनाभिधम् ? ।
अथवा विषमाक्षसंज्ञया प्रकटं ते शिव दुष्टचेष्टितम् ॥ २३ ॥
अयि रंगपते श्रियःपते करुणापूरणमत्र नः प्रभौ ।
कुरुते न भवान् कुतो नु वा नृपकृष्णे त्वदभेदचिन्तके ॥ २४ ॥
मम सुंदरपूर्वकेश्वरो मथुरापत्तननाकः प्रभुः ।

अवतादनिशं पुरीमिमामिति सप्तांगकराज्यकामनाम् ॥ २५ ॥
वितथां कुरुते कथं भवान् नृपरूपांगवियोजनेन भोः? ।
अथवा तव सुंदरेशतां स्थिरभिन्नां किमु मन्यते भवान्? ॥ २६ ॥
अयि सेतुपते सुगंधिकाप्रिय नाथेश भवन्तमाश्रितम् ।
रघुपुंगववत् कुतो नु नो नृपकृष्णं स्थिरमाचितोत्भवान्? ॥ २७ ॥
बहुना लपितेन किं मनः? स्तिमितं तिष्ठ सुमीलितः प्रभुः ।
अथवा स्मरता परां शिवां परमं साम्यमुपायि शंभुना ॥ २८ ॥
यदयं प्रभुराट् शिवा ३—शिवा ३ —इति संजप्य सुतारकं मनुम् ।
जनतासविधे हृदि स्थितं परमं भावमकाशयत् स्फुटम् ॥ २९ ॥
हैयंगवीनहृदयां ज्ञात्वा स्वमनोनिरोधतेजोभिः ।
हृदयं विलाप्य मातः प्रसादसर्पिर्जिघृक्षते कृष्णः ॥ ३० ॥

श्रीमातस्त्वामपर्णामभिदधति सुरा दायदानात् सुतेभ्यः
श्रीकृष्णो नाल्वडीगः किमु न तव सुतः? किन्तदिष्टं प्रदिष्टम्? ।
त्वद्दिव्यं रूपधेयं प्रकटयितुमयं वांछति प्रौढभक्त्या
तद्दानादेव मातस्त्वपगतमृणमित्यन्यथा नेति विद्धि ॥ ३१ ॥

हे गंगे देवि शंभोः शिरसि शिवतमे लब्धवासे स्मरेः किम्?
त्वन्मध्ये राजधुर्यः क्वचिदधिकतृषां प्राप्स्यति ध्यानहेतोः ।
योक्ष्यत्येवाथ कामं नियमितकरणः स्वान्तमर्धेन्दुमौलौ
योगोसौ त्वन्महिम्ना फलित इति मुदा ज्ञाप्यसे बन्धदाही ॥ ३२ ॥

श्रीकाशीविश्वनाथ त्वयिधृतमनसः पाशमोक्तः, सुराजा
त्वद्रूपान्विप्रवर्यान् प्रतिदिनमविता मृष्टभोज्यैर्नितान्तम् ।
इत्यद्धा त्वन्मनस्कं गतनिखिलमलं तारकब्रह्मदानात्
आनन्दे सच्चिदाद्ये निरुपधिपरमेऽयोजयोऽतः सुखं स्मः ॥ ३३ ॥

इति शिवसुब्रह्मण्यो मैसूर्संस्थानशालास्थः ।
बहुधाप्रतप्तहृदयः प्रालपदार्याच्छगुणविष्टः ॥ ३४ ॥

[२]

वर्षे विक्रमनामके दिनपतौ याते कुलीरं शुचौ ।
मासे दर्शदिने शनेरहनि भे पुष्ये निशाद्ये दले ॥ (३-८-१९४०)
आत्रेयो महिशूरदेशनृपतिः श्रीतुर्यकृष्णप्रभु-
र्भेजे धाम परं हयास्यचरणन्यस्तात्मरक्षाभरः ॥ १ ॥
धीरोऽयं हयखाष्टभू (१८०७) समशके संवत्सरे तारणे
ज्येष्ठे शुक्लदले तिथौ शिव (११) मिते चान्द्रेर्दिने त्वाष्ट्रभे॥ (४-६-१८८४)
श्रीकृष्णावनिपालमौलिरमलो वाणीविलासेश्वरी-
गर्भाब्धौ प्रथमस्तनूज उदभूद्राकाशशीव प्रियः ॥ २ ॥
श्रीकृष्णक्षितिपाल एष सुमतिर्बाल्ये सुधीभ्यः कला
निस्तन्द्रोऽधिगतः सुनीतिमधुराः शुक्लेन्दुवत्प्रत्यहम् ॥
तेजोभिर्विपुलैर्वृतः शुभततीः कुर्वन्नयज्ञोऽन्वशा-
दष्टत्रिंशतमब्दकान् वसुमतीं धर्मैः प्रजा रञ्जयन् ॥ ३ ॥
हन्ताऽयं महिशूरदेशजनिधिः सर्वोपगम्यः सतां
सर्वाभीप्सितदायकोऽद्भुततमः स्तुत्योऽखिलैः साम्प्रतम् ॥
कर्णाटावनिमीयुषां तनुभृतां दुर्दैवतोऽन्तर्दधे
तज्जः शोकहुताशनोऽधिकजवश्चेतांसि दन्दह्यते ॥ ४ ॥
भूपेऽस्मिन्नुषिताः प्रजासु समताबुद्धिर्गुरौ नम्रता
देवे विप्रचये च भक्तिरमिता वेदागमेषु स्पृहा ॥
शुध्दाचाररतिर्बुधेषु ममता निस्स्वानुकम्पा शुभा
गीश्चेत्यद्भुतसद्गुणाः स्मृतिपथारूढाः शुचं तन्वते ॥ ५ ॥
श्रीकृष्णक्षितिनेतुरीदृशमनःपक्तेर्हयास्यार्चक-
ज्ञानाम्भोधियतीशकृष्णकलिजिच्चक्राङ्कमासेदुषः ॥
बीजं तादृशसंयमीन्द्रकरुणातत्त्वोपदेशः परं
नान्यो हेतुरिहेति सम्प्रति वयं निस्संशयं मन्महे ॥ ६ ॥

सांस्कृत्या रसभावमेदुरतनोः सर्वोत्तमाया गिरो
नानाज्ञानसुनीतिबोधनपटोस्तस्याः शुभाया बत ॥
शोच्याया बहुधा सहायमधुना सन्तन्वतो भूपतेः
श्रीकृष्णस्य वियोगतो वयममी तद्भाषितज्ञा हताः ॥ ७ ॥
देशक्षेमजनावनाखिलकलासंवृद्धिसद्रक्षण-
प्राच्याध्वोद्धृतियन्त्रशालकरणादीनां विधाता नृपः ॥
नेदृग्भारतभूतलेऽद्य नितरामीदृक्षभूमीपति
व्याघाताद्व्यसनाब्धिमग्नहृदया दीना ह्यनाथा वयम् ॥ ७ ॥
तादृग्भूपवियोगदुस्सहशुचं लक्ष्मीविलासेश्वरी-
सम्राज्ञ्या जयचामराजनृपतेस्तद्बान्धवानां च सः ॥
सोढुं वाजिमुखः परस्त्रिजगतामीशो विधत्तां परं
धैर्यं चेति तमेव देवमधुना सम्प्रार्थयामो वयम् ॥ ९ ॥
इत्थं ज्यौतिषरत्नं संस्थानमहाबुधः कविः शेषः ॥
श्रीतुर्यकृष्णनृपतेश्चरमश्लोकावलिं शुचा व्यतनोत् ॥ १० ॥

[ ३ ]

दाता रसज्ञः कविकल्पशाखी
कर्णाटकक्ष्मातलसार्वभौमः ।
कृष्णप्रभुर्यद्दिवमभ्यगात्त
त्सुधीजनानां दुरदृष्टमेव ॥
इक्ष्वाकुस्स धरापतिः कृतायुगालङ्कारभूतो गतो
रामो दाशरथिर्गतस्स भगवांस्त्रेतायुगालङ्कृतिः ।
राजा धर्मतनूभवोपि च गतस्स द्वापरालङ्कृतिः
श्रीमान् कृष्णमहीपतिः कलियुगालङ्कारभूतो गतः ॥

सन्ति क्षितीन्द्रा बहवो धरित्र्यां
तेषां कथाऽनेकविधा तथाऽऽस्ताम् ।
कृष्णप्रभोर्विश्वजनीनगाथा
स्सचेतनश्चेद्भुवि विस्मरेत्कः ॥

सत्यव्रतं कृष्णविभोस्स्मृतं चे
न्न विस्मयं कस्य तनोति जन्तोः ।
तत्तादृशः क्ष्मातलसार्वभौमो
गतो दिवं हन्त विधेर्बलेन ॥

धर्माणां परिरक्षणेपि तदनुष्ठानेऽपि बद्धादरः
प्रायस्सम्प्रति दृश्यते जनपतिः कृष्णप्रभोर्नेतरः ।
तस्मिन् राजकुलोत्तमे गतवति स्वर्गं विधेराज्ञया
धर्मा निश्शरणाः कथं परमितस्स्थायन्ति हन्त क्षितौ ॥

स्वभावसिद्धं निधनं न शक्तो
विलङ्घितुं कोपि कुतो विषादः ।
कृष्णप्रभोश्शाश्वतकीर्तिकायः
प्रमोदहेतुर्भवताज्जनानाम् ॥

काव्यकलानिधिः चिदम्बरशास्त्री.
मैसूरुसंस्थानशतावधानी.

श्रीः.

# श्रीनारायणपुर (मेलुकोटे) विभूषण—श्रीसम्पत्कुमार—नवरत्नहार-स्तवः उभयवेदान्तप्रवर्तनसभामङ्गलाशंसनं च.

(विक्रमवत्सरस्य)

---

यदुगिरितटलोला कालजीमूतनीला
निगममकुटमाला दीनलोकैकपाला ।
विभवविलयलीलाऽमेयकल्याणजालाऽ-
वतु मुनिनुतशीला देवता लोकखेला ॥१॥

दुरितहरणधीरा रूपनिर्धूतमारा
धृतहरिमणिहारा तुङ्गकारुण्यपूरा ।
निरुपमसुखधारा देवता मामुदारा
श्रितयदुगिरिसारा पातु लूनारिवारा ॥२॥

रुचिरमृदलचेलं व्यायताम्भोजमालं
बलविहतकुशीलं फालधूतेन्दुबालम् ।
गतिविजितमरालं दानवानां करालं
यदुगिरिवरलोलं नौमि विज्ञानमूलम् ॥३॥

वृजिनतरुकुठारं सच्चिदङ्कूरनीरं
भवगिरिशतधारं शाश्वतानन्दधारम् ।
यदुगिरिसविहारं भावये वेदसारं
हरिमसुकृतिदूरं सिन्धुजाप्रेमभारम् ॥४॥

सदोल्लसदकम्पनाप्रतिमसिन्धुजाचञ्चला-
युताऽमितकृपामृताविरतदायिनी सर्वतः ।
मुदं वितनुतां परा यदुगिरौ सदा भासुरा
त्रिलोकभवतापसंहृतिचणा च कादम्बिनी ॥५॥

शृङ्गे पुन्नागकुन्दादिमतरुलसिते सप्तलाजातिमल्ली-
वल्लीजालैर्मनोज्ञे सुरभिलदशदिङ्मण्डलैर्यादवाद्रेः ।
त्रातुं बृन्दं नतानां निरुपधिकृपया भासमानं परस्माद्-
व्योम्नः शश्वद्रमेशं त्रिभुवनवपुषं नौमि नारायणं तम् ॥६॥

यं शैलेऽत्र यतीश्वरो भगवतः स्वप्नात्प्रहृष्टान्तरः
खाक्ष्यभ्रेन्दु (१०२०) मिते शके च बहुधान्याब्दे च पौषे तिथौ ।
कल्याह्वे धवले गुरोः सुदिवसे देवप्रसूभे हरिं
वल्मीकादुदितं ददर्श पयसासिञ्चत् स पायाद्धरिः ॥७॥

पूर्वाशाभिमुखं मुखं विदधती सव्ये कराब्जद्वये
बिभ्राणा सगदं दरं तदपरे हस्तद्वये बिभ्रती ।
चक्रं निर्भयमुद्रिकां च परमा मन्मानसे भासतां
दिव्या काचन देवता यदुगिरेः शृङ्गस्य भूषायिता ॥८॥

भवाभिधतपातपप्रबलतापखिन्नं जडं
हिताहितविवेकविच्युतमनन्तदोषाकरम् ।
दयारससुशीतलानघतमैः कटाक्षैरिमं
जनं परमपूरुषो यदुगिरीश्वरो वीक्षताम् ॥९॥

श्रीनारायणपत्तनेऽत्र शरनेत्राष्टेन्दु (१८२५) संख्ये शके (१९०२)
वर्षे श्रीशुभकृत्यनुत्तमनृपश्रीकृष्णराज्यप्रदे ।

इत्थां भूमितले सभोभयसुवेदान्तप्रवर्तन्यसौ
श्रीरामानुजसंयमीन्दुवरसिद्धान्तावने जाग्रती ॥१०॥

अकृत्रिमवचस्तदुज्ज्वलशठारिरामानुज-
त्रयीमकुटदेशिकादिमशुभोक्तिसंराक्षिणी ।
सभा भुवि विराजतां यदुगिरीशसम्पत्सुता-
नथामितकृपापरिप्लुतकटाक्षजालैरियम् ॥ ११ ॥

श्रीरामानुजमस्करीन्द्रजननर्क्षोहोत्सवे मञ्जुले
प्रत्यब्दं यदुशैलनेतृदयितारम्यालये दीव्यती ॥
गोष्ठीयं निबिडा परीक्षकपरीक्ष्यौघैरलं मानितैः
सद्भिः सभ्यजनैश्च राजतुतरामाचन्द्रभं भूतले ॥१२॥

महिशूरपुरपकृष्णक्षितिपतिजयचामराजनरपालौ ।
दीर्घायुषावरोगौ विजयेतां यदुगिरीशघनकृपया ॥१३॥
इत्थं ज्यौतिषरत्नाभिधबिरुदः शेषसूरिकविमौलिः ।
नवरत्नहारविनुतिं ससभाभविकां चकार हृष्टमनाः ॥१३॥

ज्यौतिषरत्नम्,
करूरुशेषाचार्यः.

श्रीः

# श्रीहयवदनसेवासङ्घः

नमस्त्रेधाविभक्तानामात्मनामन्तरात्मने ।
ब्रह्मणे हयवक्त्राय बन्धमोक्षैकहेतवे ॥१॥

अयि महोदयाः !

मोमुद्यामहे वयमत्रभवतां भवतामुदन्तमिममावेदयितुम् । यत् प्रसक्तविक्रमवत्सरे कार्तिकसिताष्टम्यां (७–११–१९४०) श्रीमन्महाराजसंस्कृतमहापाठशालाया वेदशालाङ्गणे निरवर्ति महतासमारम्भेणैतत्सङ्घीयैर्भगवतो विद्याधिनाथस्य श्रीहयाननस्य जयन्तीमहोत्सवः । इमञ्च महोत्सवं प्रतिशरदं श्रावणश्रवणर्क्ष एव निर्वर्तयन्तोऽप्यास्मिन् वर्षे तदानीमेवाखिलजन जेगीयमान यशोराशेरनन्यसामान्य मान्यराजन्यगुणविभवस्य श्रीमत्कर्णाटकसिंहासनाधीश्वरस्य अस्मन्नयनपथमतिवृत्त्य श्रीमद्धयाननपादाम्बुजयुगलमासेदुषः श्रीमत्तुरीय कृष्णराजसार्वभौमस्य यशश्शरीराधिगमेन दुर्भरव्यसनकलुषिताः सङ्घीयास्तदात्वे नाशक्नुवन्महोत्सवानन्दमनुभावितुम् । तदा खलु परिष्करण निष्णाताः विद्यार्थिनो हरिन्मणिस्तम्भायमानैः कदलीकाण्डै र्हरिततरैराम्रपल्लवैररुणारुणैरितरकिसलयैर्मनोहराभिर्मल्लिकादिकुसुममालिकाभि र्मणिमञ्जरीमञ्जुलै र्विद्युद्दीपपुञ्जैरच्छाच्छैरादर्शै र्भावाविष्करणभव्यैरपरिमितैरालेख्यैश्चालमकार्षुस्सभामण्डपम् । मण्डपमध्यमश्रेणिश्च श्रीहयाननालेख्यैर्मण्डिता रराज । तन्मध्येच सलक्ष्मीकमुत्तुङ्गं तुरगवदनाचित्रं भगवतश्चतुर्वेदीपठनमहितपुरुषसूक्तावगत सौलभ्यादिकमुपादिशदिव समेभ्यः । तत्रत्याने-

कादर्श सङ्क्रान्तप्रतिमस्स सैन्धवास्योऽलक्ष्यताविष्कुर्वन्निवात्मनो निखिल जगदन्तर्यामिताम् । तदग्रतश्च विविध विद्युद्दीपनिचय सभाजितो विशदीकृत दशदिगन्तरालः पृथुलो विद्युद्दीपो विरराज सतारागणः शशाङ्क इव सेवमानोहयवदन मपनेतु मात्मनो दोषाकरापवादम् । अथचापूजयन् श्रीलक्ष्मीहयग्रीवमवनतकन्धरा भक्तिभरितभावाश्छात्राः । तदनु समुपागते सायन्तनघण्टाचतुष्कसमये यथायथमासनान्यलमकुर्वन् श्रीमन्तो धर्माधिकारिणो विद्वन्मणय आंग्लकलाकोविदाः पौराः पत्रिकाप्रतिनिधयो गायका वादकाश्च । तदनु सरभसमुत्थाय सभान्तराला न्नयायवेदान्त धर्मशास्त्रविद्वांसः श्रीमन्तो नीलातंपल्यभिजना आस्थानविद्वांसः श्रीवेङ्कट नृसिंहार्यमहोदयास्सविनयमावेदयामासुः स्वागतमागतेभ्यः । अश्रावयंश्च सभास्तारान् स्वोपज्ञानि प्रार्थनापद्यानि वीणावादनानुवादमेदुर गानमधरिमणा स्वरेण । न्यवेदयंश्च साङ्गिकं प्रागारचितं कार्यकलापं तदात्वनिर्वर्त्यञ्च प्राच्यनव्यन्यायवेदान्तविद्वांसः एतत्कलाशालीया श्रीमद्विशिष्टाद्वैतवेदान्तप्रधानोपाध्याया आस्थानविद्वांसः श्रीदेशिकदर्शनविजयध्वजाः श्रीमन्त आत्मकूरु दीक्षाचार्यमहोदयाः । अथोपन्यास्थंश्च कांश्चन विषयानधिभक्तियोगं भङ्ग्या भावगम्भीरया राजकीय योगशास्त्रप्रधानोपाध्याया स्सांख्ययोगशिखामणयो न्यायाचार्य मीमांसारत्नेत्यादि बिरुदविभूषिताः श्रीमन्तः तिरुमले कृष्णमाचार्यमहोदयाः । अथागायन्नतिमधुरमास्थान सङ्गीतविद्वांसः श्रीयुताः टि. कृष्णैय्यङ्गार्यमहोदयाः । आस्थानविदुषां श्री शिवरुद्रप्पमहोदयानां वाणीवीणाक्वणनमनो हारिणा तत (फिड्ल्) वाद्यानुवादेन, श्रीशङ्करनारायणीयेन शङ्कर डमरु निनाद डम्बरविडम्बिना मर्दल ध्वनिना, मधुकर झङ्काराहङ्कृति पाटच्चरेण श्रुतिरवेण, समन्वितरूपक त्रिपुटादिताल-

प्रभेदै, रसङ्कीर्णारोहणावरोहणक्रमोपेतरागालापेन प्रतिभासितपाण्डित्य प्रागल्भ्यवर्णविन्यासवैखर्या चोपलक्षितं गीतं तद्यतानीत्सर्वानपि सभास्तारानमन्दानन्दाम्बुधिनिमग्नान् । तदनु निर्वर्तिते नीराजने भगवतस्तुरगवदनस्य, साञ्जलिबन्धं समभ्यर्थिता श्वश्श्रेयसपारम्परी सपरिजनस्य सराष्ट्रस्य श्रीयदुवंशललामस्य श्रीमतो जयचामराज महीपालमणेः । अभिनन्दिताश्चामोघीकृतास्मदभ्यर्थना आविष्कृत निजकौशला गायकवादकोपन्यासकाः । समर्पिताश्च धन्यवादा बहुधोपकृतवद्भ्योऽस्मत्कलाशालाध्यक्षवर्येभ्यः श्रीमद्भ्यः एम् वि. कृष्णमूर्ति एम्.ए. महाशयेभ्यः तथास्मत्सङ्घाध्याध्यक्षेभ्यस्तर्कवेदान्त विद्वद्भ्यः पाञ्चरात्रप्रधानाध्यापकेभ्यः श्रीमद्भ्यः कस्तूरि श्रीनिवास- रङ्गाचार्यमहाशयेभ्यश्च । अभ्यर्हिताश्च यथायथं समुचितवचोविशेषै- र्विद्वन्मणयोविद्यार्थिनोऽन्ये सभासदश्च । तदनु परिगृहीतताम्बूलप्रसादास्सभ्या निर्भरानन्द तुन्दिला यथायथन्निश्चक्रमुः । त्रयोदशभ्यस्संवत्सरेभ्यः प्राक् प्रतिष्ठापितस्यापि वाचकमहोदयानां स्वान्तेषु लब्धास्पदस्य सङ्घस्यास्य तृतीयोऽयंवत्सर इति परिगण्यते । हायनेचास्मिन् श्रीपरकालमठीयवेदान्तदेशिकविहारसभया प्रवर्तित परीक्षास्वेतत्सङ्घीयाः केचनच्छात्राः दत्तपरीक्षा यथोचितबहुमानभागिनश्चाभूवन् तथासङ्घोऽप्ययं यथोचितं बहुमानितोऽभवत् । श्रीमतोहयमुखस्य महताश्चानुग्रहेण सङ्घोऽयमितोऽप्यभ्युदयातिशयभाग्भूयादित्यनिशमाशास्मह इति.

---

## श्रीहयवदनसेवासङ्घमहोत्सवपठितस्वागतपद्यावलिः

---

" अमन्दानन्दसंदोहतुन्दिलस्सैन्धवाननः ।
यायाज्जगदनिद्राणचिन्मुद्राकरमुद्रितः ॥ १ ॥

" कल्याणी कापि वाणीरमणमुखसुरश्रेणिकोटीरकोटी
निर्यन्माणिक्यशोभाशबलितचरणाम्भोजसौवस्तिकश्रीः ।
व्यूढोरस्का महिष्या जलधितनुजया भागधेयं नतानां
लक्ष्मीवाहाननाख्या मनसि मम चिरं देवता सन्निधत्ताम् ॥ २ ॥

लक्ष्मीलीलारविन्दस्रुतमधुरमधुस्पर्धिविद्याविलास-
स्फर्धालुच्छात्रसंपद्वितरणनिपुणीभावविख्यातकीर्तिः ।
नानाशास्त्रेष्वभिज्ञैरनुगुणबिरुदैर्लब्धवर्णैः प्रपूर्णा-
वाणी प्रासादनाम्नी भुवि लसति महापाठशाला विशाला॥ ३ ॥

तुरगवदनसेवासंघनाम्नीसभेयं
नृपतिविबुधवाणीमन्दिरेसम्प्रक्लृप्ता ।
जयतु जगतिलक्ष्मी सैन्धवास्यानुकम्पा
शतगुणपरिणाहा मण्डिता पण्डितेन्द्रैः ॥४ ॥

उपन्यसनवैखरी गळितसर्ववैयाकुली
चिराभ्यसनपौष्कलीविधृत शास्त्रसौरभ्यदा ।
सुशिक्षककृपेक्षणैर्लसतु शिष्यपारम्परी
समीक्षणकृतक्षणा हयमुखस्य लक्ष्मीशितुः ॥ ५ ॥

कर्णाटदेशविलसद्घनदिव्यरत्न-
सिंहासनस्थितिरुदारमनाः प्रजासु ।
आचन्द्रभं सुजयचाममहीपतीन्द्रो-
जीयाच्चिरायुरवनाविह धर्मगोप्ता ॥

इति तुरगाननसेवासंसदि वाहाननस्य सान्निध्ये ।
नीलातपल्लयभिजनो वेङ्कटनरसिंहसूरिराशास्ते ॥ ३ ॥

विद्वान् नीलातनहळ्ळि वेङ्कटनरसिंहाचार्यः

# विषयसूचना

## सम्पादकीयसमितिः

---

१. श्रीमन्तः अर्थशास्त्रविशारदाः विद्यालङ्काराः महामहोपाध्यायाः डाक्टर् आर्. शामशास्त्रिणः, बि.ए., पि.एच्.डि., एं.आर्.ए.एस्., विश्रान्त मैसूरु प्राच्यकोशागाराध्यक्षाः शासनविमर्शशाखाध्यक्षाश्च.

२. श्रीमन्तः प्रोफेसर् सि. आर्. नरसिंहशास्त्रिणः, एम्.ए., मैसूरु महाराजाकालेज् संस्कृत प्रधानोपाध्यायाः

३. पण्डितरत्नं, धर्माधिकारिणः ब्र. श्री. काशी शेषवेङ्कटाचलशास्त्रिणः

४. साहित्यरत्नं, महाविद्वांसः ब्र. श्री. क. गोपालकृष्णशास्त्रिणः विश्रान्त महाराजाकालेज् संस्कृत पण्डिताः

५. ज्यौतिषरत्नं, महाविद्वांसः ब्र. श्री. करूरु शेषाचार्याः, महापाठशाला ज्यौतिषप्रधानोपाध्यायाः

६. विद्वांसः ब्र. श्री. एस्. वेङ्कटाचार्याः, महापाठशाला साहित्यप्रधानोपाध्यायाः

७. श्रीमन्तः एस्. वि. कृष्णमूर्तयः, एम्.ए., महापाठशालाध्यक्षाः (सम्पादकाश्च)

---

# विज्ञप्तिः

भो भो महाशयाः! सहृदयाः! सप्रश्रयमिदमिदानीं विज्ञापयामः-संस्कृतविद्याभिमानिनः पुरुषप्रवराः यं कंचन विषयमधिकृत्य संस्कृतभाषामयं अनतिसंक्षिप्तविस्तरं उपक्रमोपसंहारपरिकर्मितं कस्याप्यनुद्वेगकरं अचर्चितपूर्वं कालदेशदशानुगुणं प्रपञ्चोपकारकरं धर्माद्यविरुद्धं "जीर्णमङ्गे सुभाषितम्" इति निर्वेदस्य "वीरा वाचैव केवलम्" इत्यपवादस्य वा प्रशमकरं प्रस्पष्टमुखविलासमुपन्यासं विलिख्य यदि प्रेषयेयुर्महान्तः, तेभ्यो महद्भ्यः समर्प्य अनन्तान् धन्यवादान् पत्रिकायामस्यां तमुपन्यासं पारयामः प्रकाशयितुम् ॥

यदीच्छति वशीकर्तुं जगदेकेन कर्मणा ।
परापवादसस्येभ्यो गाश्चरन्तीर्निवारयेत् ॥
न हीदृशं संवननं त्रिषु लोकेषु विद्यते ।
दया मैत्री च भूतेषु दानं च मधुरा च वाक् ॥

संपादकस्य.

---

# मूल्यप्रकारः

१. अस्याः पत्रिकायाः वार्षिकम् आग्रिमं मूल्यं सार्धैकरूप्यकम्
प्रापणव्ययः (भारतमण्डले.) .... .... पादरूप्यकम्
२. विद्यार्थिनां पुनः एकरूप्यकम्. प्रापणव्ययः ,,
३. विभिन्नदेशे सपादरूप्यद्वयम् (3s.) प्रापणभृतिः अर्धरूप्यकम्

पत्रिकाप्राप्तिस्थानम्,

संपादकः,

श्रीमन्महाराजसंस्कृतमहापाठशाला, मैसूरु.

## सधन्यवादमस्माभिरङ्गीकृता एताः विनिमयरूपाः पत्रिकाः

---

1. श्री संस्कृतसाहित्यपरिषत्पत्रिका, श्रीनगरम्.
2. संस्कृत साहित्यपरिषत्पत्रिका, कल्कत्ता.
3. उद्यानपत्रिका, तिरुवाडि.
4. सुप्रभातम्, काशी.
5. सूर्योदयः, काशी.
6. संस्कृतरत्नाकरः, जयपुरम्.
7. शङ्करगुरुकुलपत्रिका, श्रीरङ्गम्.
8. अच्युतः, काशी.
9. कल्याणम्, गोरखपुरम्.
10. मधुरवाणी, वेलगाम्.
11. The Mythic Society Journal, Bangalore.
12. Annals of the Bhandarkar Oriental Research Institute, Poona.
13. Review of Philosophy and Religion, Poona.
14. Journal of Oriental Research, Madras.
15. The Law College Magazine, Madras.
16. Sunday Edition, "The Hindu," Madras.
17. The Aryan Path, Bombay.
18. The Theosophical Movement, Bombay.
19. The Philosophical Quarterly, Calcutta.
20. Karnataka Historical Review, Dharwar.
21. New Asia, Calcutta.
22. Rising Youth, Maharaja's High School Mysore.
23. "Yoga," Bombay.
24. Poona Orientalist, Poona.

25. The Mimamsa Prakasa, Poona.
26. Brahmavidya, Adyar, Madras.
27. Oriental Literary Digest, Poona.
28. The Jaina Gazette, Lucknow.
29. The Punjab Oriental Research, Lahore.
30. ಆಂಧ್ರ ಸಾಹಿತ್ಯಪರಿಷತ್ಪತ್ರಿಕಾ, ಕಾಕಿನಾಡ.
31. ಗ್ರಾಮಸೇವೆ, ಮೈಸೂರು.
32. ಸನಾತನಮತಪ್ರಚಾರಿಣೀ, ಭಟ್ಕವಳ್ಳಿ.
33. ಜಯಕರ್ಣಾಟಕ, ಧಾರವಾಡ.
34. ಸದ್ಬೋಧಚಂದ್ರಿಕೆ, ಆನಂದವನ.
35. ವಿಶ್ವಕರ್ಣಾಟಕ, ಬೆಂಗಳೂರು.
36. ತಾಯಿನಾಡು, ಬೆಂಗಳೂರು.
37. ಆಧ್ಯಾತ್ಮಪ್ರಕಾಶ, ಹೊಳೆನರಸೀಪುರ.
38. ಕರ್ಣಾಟಕ ಸಾಹಿತ್ಯಪರಿಷತ್ಪತ್ರಿಕೆ, ಬೆಂಗಳೂರು.
39. ಕಾದಂಬರೀಸಂಗ್ರಹ, ಚಾಮರಾಜನಗರ.
40. ಪ್ರಬುದ್ಧಕರ್ಣಾಟಕ, ಮೈಸೂರು.
41. ವಿವೇಕಾಭ್ಯುದಯ, ಮೈಸೂರು.
42. ಗರಿಕೆ, ಮೈಸೂರು.
43. Sen Tamil, Madura.
44. ವಿಭೂತಿ, ಸಿಕಂದರಾಬಾದ್.
45. ಗೌರ್ನ್ಮೆಂಟ್ ಟ್ರೈನಿಂಗ್ ಕಾಲೇಜ್ ಪತ್ರಿಕೆ, ಮೈಸೂರು.

———

॥ श्रीः ॥



# श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका

प्रतिमासत्रयं प्रकटीक्रियमाणा

" कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः "

(ईशोपनिषत्)

सम्पुटम् १६] 1940-Dec : विक्रमः-हैमन्ती [सञ्चिका ४

## मकुटाभिषेकवैजयन्ती.

---

(श्रीमन्महीशूररत्नसिंहासनाधीश्वर श्रीमज्जयचामराजेन्द्र ओडेयर् बहद्दूर् महाराज पट्टाभिषेकमहोत्सवामन्दानन्दलहरी)

अयि प्रियपाठकमहाशयाः, अतिमहतीयं नः समेषां प्रमोदपराकाष्ठा, यत् महीशूररत्नसिंहासने पट्टाभिषिक्तः सुगुणानिधिः

श्रीमज्जयचामराजेन्द्र ओडेयर् महाराजः वत्सरेऽस्मिन् भाद्रशुक्ल-सप्तम्याम् । यद्धि सिंहासनं श्रीमद्भोजराजपूजितं प्रथते, यच्च दिव्यं, यच्चाधितिष्ठन् गुरुनायं गौरवं नीयते, मातृमानं मान्यते, सखिभावं संभाव्यते, देवस्तावं स्तूयते, दिविषदर्चम्भ्यर्च्यते, मान्य-नामं नम्यते, यदधितिष्ठता च आचार्येणेवोपदिश्यमानाः पोषकेणे-वादिश्यमानाः विधेयश्रावं सादरावधानं शृण्वन्ति प्रजाः, दूतहार-मस्य वार्ताः परत्र हरन्ति, भृत्यकारमस्याभिमतं कर्म कुर्वन्ति । यदाधितिष्ठते च सुचिरदिदृक्षितायेव स्निग्धाय नितरां स्पृहयन्ति । प्रियवन्धव इव कल्याणान्यजस्रमभ्यर्थयन्ते । यदधितिष्ठतश्चाना-घ्रातपरिचितिगन्धादपि विश्वस्तादिव सुहृदो न मात्रयाप्युद्विजन्ते । प्रकृतयः, अशोभनमनुष्ठातारो वा शिक्षाधिकृतादिवापराधिनः क्वापि निलीयन्ते "नेतःपरं यावज्जीवमकृत्यमाचरेमेति" सुदृढ-निश्चयाः । यदाधितिष्ठतश्चोपकर्तुरिव प्रथीयसीं प्रथां प्रकाशयन्ति, आज्ञां चेश्वरानुग्रहग्राहं नम्रशिरस्का गृह्णन्ति । यश्चाधितिष्ठति बहूपकर्तरीव कृतज्ञतां निवेदयन्ति, पितरीव महनीयतामतिमा-बध्नन्ति । किं बहुना जीवितमप्युपयोज्यात्मानं कृतार्थं न मन्यन्ते, इत्यहो महीयसोऽस्य सिंहासनमहिम्नोर्गलं वानुरोधो वाक्षेपो वा विकल्पो वास्तीति जितमेतदधिष्ठात्रा सर्वं भाग्यजातमिति अमन्दा-नन्दलहरी । एष च महाराजः ऋग्वेदादिविधानमनुसरन्त्या प्रकृत्या यथाविधानमभिषिक्तः मातृपित्राचार्याद्यनुशिष्ट इति सकलकल्याण-गुणनिधिः अन्यादृश्या प्रजापालनधोरण्या विचित्रयाखिलानप्य-न्यान् राज्ञोऽतिशेतामिति सर्वेश्वरं सदा साञ्जलिबन्धमभ्यर्थयामह इति शिवम् ॥

---

## श्रीमज्जयचामराजपट्टाभिषेकमङ्गलाशंसनपद्यमाला

[१]

श्रीमद्विक्रमवत्सरे शुभतरे भाद्रे दले चादिमे
सप्तम्यां रविवासरे विमलभे मैत्रे तुलायां तनौ। (८-९-१९४०)
नानारत्नमयेऽभिषिक्तमनघे सिंहासने भूसुरैः
सद्भिः श्रीजयचामराजनरपं पायान्मुकुन्दः सदा ॥ १ ॥

रोहिण्या प्रियया यथा हिमरुचिः सूर्यो यथा छायया
त्रय्या विप्रवरो यथा जलधरो नीलो यथा शम्पया।
आम्रो मल्लिकया च राजति यथा राज्यश्रिया त्वं तथा
राजेथा जयचामराजनृपते भूमौ बहून् वत्सरान् ॥ २ ॥

एधेथा जयचामराजसुमते पर्वाब्धिकल्लोलवत्
विन्देथा विपुलायुरुल्वणसुखं सद्भिर्नयज्ञैर्वृतः।
मोदेथाः प्रकृतीर्हितैरनुदिनं संरञ्जयेथा भृशं
श्रीमत्तुर्यपितृव्यकृष्णनृपवत् कीर्तिं लभेथाः पराम् ॥ ३ ॥

वर्तेथाः समया धिया प्रकृतिषु प्राज्ञोक्तिषु प्रश्रितः
भूया नीतिविदग्रिमेष्वभिरुचिं भक्तिं च याया गुरौ ॥
जायेथा जयचामराज! नृपतेः कार्येषु दत्तश्रवाः
धर्म्येणैव सतां मतेन सुपथा त्वं सञ्चरेथा विभो ॥ ४ ॥

कारुण्यं कुरु दुर्गतेषु न मनो द्यूते विधेहि प्रभो
दुस्सङ्गाद्दुरिताद्बिभीहि च सदा त्रायस्व धर्मं सताम्।
काले जागृहि मा मनागपि मुधा कालं नय प्रत्यहं
राज्यायव्यययोरवेहि गणनां प्रब्रूहि हृद्यं वचः ॥ ५ ॥

खलोक्तौ मा कर्णं दिश मनुमतं सागसि जने
विधेहि त्वं दण्डं बहुविधकला वर्धय मुदा ।
स्वदेशं बह्वायं जनय जयचामक्षितिपते
प्रजानां वैमत्यं प्रशमय वचोभिः सुमधुरैः ॥ ६ ॥

वेदज्यौतिषशब्दतन्त्रगणितालङ्कारकाव्यागम-
श्रुत्यन्तानृतगोपरामचरितादिप्राज्ञवद्धादरः ।
दैवीं श्रीजयचामभूपतिमणे वाणीमुदारामिमां
भाषाणां जननीं जगद्धितकरीं कुर्याः समिद्धां भृशम् ॥ ७ ॥

शाधि क्ष्मां जयचामराज नभसो मध्यं यथा भास्करोऽ-
नड्वान् गोष्ठमिवापगाह्रदमिभाधीशो यथाऽम्भोनिधिम् ।
पाठीनेश इवामलैर्मणिगणैर्दीप्रं मनोहर्षणं
कर्णाटक्षितिपक्रमागतमिदं सिंहासनं संश्रितः ॥ ८ ॥

सत्यप्रेमकुमारिकामनुगुणां रूपादिभिः प्रेयसीं
सम्राज्ञीं श्रितवत्सलामुपगतः शक्रो यथा वा शचीम् ।
शम्भुः शीतगिरेर्यथा दुहितरं विष्णुर्यथा सिन्धुजां
दीर्घायुर्जयचामराजनरपः पुत्रैर्युतो राजताम् ॥ ९ ॥

इत्थं ज्यौतिषरत्नं संस्थानमहाबुधः कविः शेषः ।
जयचामराजपट्टाभिषेकशुभपद्यमालिकां व्यतनोत् ॥

ज्यौतिषरत्नं करूरु शेषाचार्यः

[२]

अखिलधर्मशास्त्रप्रमितराजगुणाशंसनं द्वाभ्याम्—

आन्वीक्षिक्यादिवर्गेऽस्वदृशविनयनं प्रौढभक्तिं कुलेश्यां
स्वस्यां सर्वेष्वदात्रयां द्विजकुलभजनं तत्त्ववित्त्वं रहस्ये।
कार्तज्ञ्यं शीघ्रकृत्वं निखिलजनभरं पूर्ववत् साम्ययोगैः
पारुष्यक्षौद्रहानिं करणनियमनं शौचचारित्ररक्षाम् ॥ १ ॥

उत्साहं वृद्धसेवां विनयमतितरां सत्त्वसम्पत्तिमग्र्याम्
औदार्यं सत्यवाक्त्वं व्यसननिरसनं दीर्घदृष्टिस्मृती च।
चामुण्डा संप्रदद्यात् नृपकृतमतये येन पट्टाभिषिक्ते
श्रीमच्चामेन्द्रभूपे जयसुपदयुते मङ्गलं शाश्वतं स्तात् ॥ २ ॥

आभिषेचनिकमन्त्रावधृताखिलदेवशक्तिवितरणाशंसनम्—

ये ब्रह्मा विष्णुशंभूहरिरिति विहिताः देवि पट्टाभिषेके
कर्तारो येऽपि दिक्पाः समजनपतयो रुद्रमुख्यास्तथा ये।
लक्ष्मीः संभूतिशच्यौ धृतिरिति विदिता धर्मपत्न्यश्च या वा
तच्छक्तिस्त्वं हि मातर्नृपमणिमवतात् स्वेन पट्टाभिषिक्तम् ॥ ३ ॥

आभिषेचनिकमन्त्रावधृतकृत्यविशेषाधिपाखिलदेवतानुकू-
ल्याशंसनं द्वाभ्याम्—

इक्षुद्वीपः कसेरुर्वरुण इति च ये स्वाम्यदाने प्रवीणाः
ऋग्वेदाद्याश्च सर्वे विजयवितरणे चास्त्रशस्त्रादिदाने।
गायत्र्याद्याश्च विद्यावितरणविषये पापनाशे सुतीर्थे-
ष्वावासा देवधुर्या अनुदिनमवने दत्तसंज्ञा भवत्याः ॥ ४ ॥

भ्रूक्षेपादेव राज्ञि श्रितबहुविभवास्तन्वते स्वस्वकृत्यम्
ते सर्वे चामराजं जयसुपदयुतं सर्वमाङ्गल्ययोगैः।
रक्षन्तु श्रीगणेशः शिवमुखकमलप्रेक्षणात्तो भवत्या
निर्विघ्ने राजकृत्ये वितरतु सकलं मङ्गलं भ्रातृभावात् ॥ ५ ॥

अखिलदेवशक्तिसमूहमूर्तिकुलदेवताश्रीचामुडाम्बानुकूल्या-शंसनम्—

हस्ताङ्गुल्या नखोत्थैर्दशविधहरिभिर्भण्डदैत्येन्द्रनुन्नान्
तांस्तान्दैत्येन्द्रदुष्टान् विहरणविधया त्वं हि मातः प्रहन्त्री ।
सा त्वं चामेन्द्रभूपं जयसुपदयुतं सर्वशत्रुप्रशास्त्री
पायाद्दीर्घायुषं ते प्रभजननिरतिस्रग्धरं स्वाभिषिक्तम् ॥ ६ ॥

इति शिवसुब्रह्मण्यो मैसूर्संस्थानशालायाम् ।
धर्मे प्रधानबोधक आशासेऽहं सुरम्यषट्पद्या ॥ ७ ॥

पि. आर्. शिवसुब्रह्मण्यशास्त्री.

[३]

अभ्यागतं निजनृपालकुलक्रमेण
कर्णाटकक्षितिरमाधिपतित्वमेत्य ।
राकाहिमांशुरिव लोकविलोचनानां
श्रीचामराड्जनपते जनय प्रमोदम् ॥ १ ॥

त्वत्पूर्वक्षितिपालकीर्तिलतिका दिक्षु प्रतिष्ठापिताः
कामं त्वत्सुगुणाऽमृतैरनुकलं वृद्धिं परां प्रापयन् ।
क्षुण्णे प्राच्यवसुन्धराधिपतिभिर्मार्गे सदा सञ्चरन्
राज्यं पालय पूजनीयमखिलैश्श्रीचामराजप्रभो ॥ २ ॥

शास्त्रेणैव विलोकय प्रतिपदं सूक्ष्मार्थसन्दर्शिना
धर्मज्ञैस्सह सम्प्रबोधकुशलैः कर्तव्यमालोचय ।
दूरे कापुरुषान् परित्यज मनोव्यामोहसन्धायकान्
श्रीकर्णाटवसुन्धरातलपते श्रीचामराजप्रभो ॥ ३ ॥

अभ्यासे सति कर्मणां कुशलता स्यादित्यवोचन् बुधा-
स्तस्मादभ्यसनं कुरु प्रतिपदं सत्कार्यनिर्वर्तने ।
तत्स्यादैहिकपारमार्थिकसुखप्राप्तेर्निदानं महत्
श्रीमंश्चाममहीपते किमितरैर्नानाविधैर्भाषणैः ॥ ४ ॥

श्रेयःप्राप्तिनिदानमेव सततं कालाद्बहोर्बोधयन्
श्रीकृष्णक्षितिपालकस्य बहुलप्रीतेर्गतः पात्रताम् ।
त्वत्संस्थानशतावधानिपदभाक् संलक्ष्यतां सादरं
नाम्ना सैष चिदम्बरः कविवरश्श्रीचामराजप्रभो ॥ ५ ॥

काव्यकलानिधि—चिदम्बरशास्त्री.

[४]

आनन्दं समवाप्य नृत्यति मुदा दृष्ट्वाभिषिक्तं जनः
श्रीमन्तं जयचामराजनृपतिं यं राजराजेश्वरम् ।
सोऽयं नन्दकिशोरसन्तततितनुर्जीयाच्चिरं भूतले
श्रीसत्यप्रियधर्मदारसहितः (सौवर्ण) सद्रत्नसिंहासनं ॥

लक्ष्मीविलाससान्निध्यसत्कटाक्षाभिलक्षितः ।
जयचामनृपं रक्षत्वभिषेकशुभोत्सवः ॥

आश्रितः कृष्णशर्मेत्थं विज्ञापयति साञ्जलिः ।
जयचामेंद्रनृपतेर्महाराजस्य सन्निधौ ॥

टि. कृष्णमाचार्यः.

# श्रीमज्जयचामराजपट्टाभिषेकप्रमोदपद्यावलिः.

आयुष्मन्! जयचामराज! धरणीमाचन्द्रमातारकं
शाधि त्वं जनपाभिषेकविधिना विप्रर्षिभिर्वर्धितः।
हर्यक्षासनमास्थितो लषहयाङ्के (१८६३) वैक्रमे वत्सरे
सप्तम्यां रविवासरे सितदळे भाद्रे तुलालग्नके ॥ १ ॥

पञ्चाशद्विधमातृकौषधिरसाक्तैर्दिव्यभावप्रदैः
कावेरीसुरनिम्नगाम्बुधिमुखानीतैः पवित्रोदकैः।
मन्त्रावर्तनपूर्वकं जयमुखश्रीचामराज! द्विजाः
वृत्रारिं वसवो यथा नृपपदे त्वामभ्यषिञ्चन्मुदा ॥ २ ॥

प्रजानां सौभाग्याज्जयसहितचामेन्द्र! भवत-
श्शुभाथर्वोपज्ञक्षितिभृदभिषेकोऽद्य ववृधे।
प्रजाहर्षाम्भोधेस्त्वमसि नृप! राकाहिमकरः
यदोर्वंश्येष्विन्दुप्रकृतिषु गुणास्सन्ति हि विधोः ॥ ३ ॥

लग्नं सद्यः प्रजानां सपदि हृदयं प्राग्विदलितं
प्रजास्नेहाद्राज्यं सपदि भवति स्वीकृतवति।
परं धन्याजाताः प्रकृतिमुपयाताः प्रकृतय-
स्त्वयेदानीं नैजां जयसहितचामेन्द्र! सकलाः ॥ ४ ॥

श्रीशस्ते जयचामराज! दिशताद्दीर्घायुषाऽनामयं
विद्याविक्रमबन्धुमित्रतनयांस्ता राजराजश्रियः।
संश्लिष्टोऽसि जयश्रिया निजशुभाख्योपक्रमे सन्ततं
तामेव श्रियमादरेण पुनरप्याशास्महे ते वयम् ॥ ५ ॥

भव्यान् सत्यमुखानथर्वनिगमक्ष्मासूक्तगीतान् धरा-
धारानात्मशुभक्रियापथबलादुन्मेषयन् सद्गुणान्।
सम्पूर्णेन्दुरिवाऽतुलं कुवलयानन्दं प्रवर्षन् प्रजाः
शाधि त्वं जयचामराज! सकलाः प्रेम्णा महिष्या समम् ॥६॥

विख्यातविश्वविबुधाः प्रदिशन्तु सर्वे
स्वस्वानुरूपविभवानितरैर्दुरापान् ।
अभ्यर्थिताः द्विजवरैर्भवते यदूनाम्
वंशाङ्कुराय जयचामनृपाय तुभ्यम् ॥ ७ ॥

सद्योजातकलाधराकृतिमिव प्रेक्ष्याऽमितोत्कण्ठया
त्वां संपूर्णकलाधरोज्ज्वलविभं भौमामरास्सन्त्वशः ।
श्रौताशीर्वचनैर्नवोनवमुखैरापूरयन्त्वन्वहं
ब्रह्माण्डं जयचामराडिति तवाऽस्मन्मङ्गलाशासनम् ॥ ८ ॥

भक्तिं धारय माधवे श्रुतिमतं धर्मं समुज्जृम्भय
प्राज्ञान् मानय रञ्जयाऽखिलभुवं दीनान् समुज्जीवय ।
निस्सारं त्यज सारमाश्रय गुरूनाराधयान्तर्मुखान्
शाध्येनां जयचामराज ! वसुधां जैवातृकस्सन्ततम् ॥ ९ ॥

वंशे यस्मिन् समजनि हरिस्सा च चामुण्डिकाम्बा
भूपास्ते च प्रथितयशसस्तत्र विश्वाभिनन्द्ये ।
संजातस्त्वं मृगपतिशिशुप्रेक्षणीयो जयाख्य-
श्चामक्ष्मापो नृपगुणनिधिस्सन्तु ते मङ्गलानि ॥ १० ॥

नीतिज्ञोऽसि युवाऽसि नैजमसमं सिंहासनं चास्थितः
त्वं श्रीमन् ! जयचामराज ! तदपि त्वां क्षीरकण्ठं वयम् ।
पश्यामो मृदुमुग्धभाषणनिधिं सम्पूर्णचन्द्राननं
तन्नूनं तव शैशवं शुभवपुस्ते शक्नुयान्नोज्झितुम् ॥ ११ ॥

जय ! चामराजववविधूननोज्ज्वल-
लघुभव्यचेल ! जयचामभूपते ।
जय ! चामराजसुतनन्दनात्मजान्
स्वसमानवाप्य सुजयादिभिर्भुवि ॥ १२ ॥

## महावीरगण्डभेरुण्डबन्धः.

हारबन्धाभ्यां, नाळिकेरफलबन्धाभ्यां च समलङ्कृतः—

(तत्र महावीरगण्डभेरुण्डबन्धपद्यमिदम्)

[1] पक्षीन्द्रोऽयं प्रदत्ते दलबल ! फलदो मान्यमाले तवेमे
यो मर्त्यामर्त्यगेयो यदुकुलमहिता देवता तावदेका ।
यो भामाक्षक्षमाभाप्रतिमभवदुदारक्षमाध्यक्षरक्षो-
धीमान् पद्मोपमाक्षो नयशय ! जयभाक् चामराट् ! चारुचाप ॥

(यथोक्तभेरुण्डवामचञ्चुग्राहितमालाबन्धः).

अत्र प्रतिपुष्पकर्णिकान्यस्तद्वादशवर्णेषु क्रमादुद्धृतेषु "नरस-भूपतिसुत ! जयजय !" इत्यानुपूर्वी लभ्यते—

[2] ज्ञानस्येनस्सुनम्यः परतरसरळो दासधीसद्मसक्तः
श्रीभूमिर्भूमिभूमा नृप ! सपदि परं सौति नीतिप्रतिष्ठ !।

---

[1] राजाशीर्वादपद्यमिदम् । दलबल—हे सैन्यबल ! नयशय—हे करगतनीति-शास्त्र ! नयः शये यस्य स नयशयः । नयः—नीतिः शयः—हस्तः । जयभाक् चामराट्—हे जयचामराज ! फलदः—इष्टार्थदः । पक्षीन्द्रोऽयं—गण्डभेरुण्डः । इमे मान्यमाले—स्वतुण्डद्वयलग्नहारबन्धयुग्मरूपमाल्ये । तव प्रदत्ते । धीमान्, पद्मोपमाक्षः मर्त्यामर्त्यगेयः, यः—भेरुण्डरूपी विष्णुः, यदुकुलमहिता देवता तावत्? देवतैवेत्यर्थः । यः, भामायां—सत्यभामायां अक्षिणी यस्य स भामाक्षः कृष्णः, तस्य क्षमा मधुरा-नगरं, तदिव आभावत्—प्रकाशवत्, भवदुदारक्षमा, महीशूरराष्ट्रम् । तध्यक्षाः, यदुवंश्यनृपाः तेषां रक्षकः साक्षाद्भेरुण्डरूपभगवानित्यर्थः । प्रकृते बन्धचित्रमुन्नेयं सहृदयैः । [2] ज्ञानस्य इनः—प्रभुः, हयग्रीवभगवान्. पूर्वार्धस्सुगमः । सुज्ञ—हे ज्ञातः ! सुभ्रूयुत—महिष्या सहित, नृप, नरसभूपतिसुत ! यथोक्तहयवदनः, सुस्थाः श्रीः—स्थिर-संपदः सुतशतकैस्सह ते सौति । जन्मजो जयः ते आस्तां तावत्! प्रियः श्रेयः पुनरपि ते स्तादित्याशासेऽहम् । हे द्विजभजकप्रभो ! यो जयः जायया समं प्रियस्तेऽभूत्.

श्रीस्सुस्थास्सुश ! सुभ्रूयुत ! सुतशतकैस्ते जयो जन्मजस्ता-
ङ्क्ष्यश्श्रेयःप्रियस्ताद्द्विजभजक ! जयो जायया यःप्रियस्ते ॥ १४

(यथोक्तभेरुण्डबन्धदक्षचञ्चुग्राहितमालाबन्धः)

अत्र प्रतिपुष्पदक्षिणदलेषु आदितः नवसु वर्णेषूद्धृतेषु यथा-सङ्ख्यं "श्रीनिवासादिमो देशिक" इति कविनामग्राहकानुपूर्वी लभ्यते—

[1] धीदश्रीदस्स दद्याद्विधिनिधिरधिकं वासवासक्तिसञ्ज्ञा
श्रीवासावासवासी दिशि दिशि स शिवं वेदमोदप्रदस्ते ।
श्रीशादेशानुशास्तुर्धृतशितपृतनस्येशकश्शस्तशक्तेः
भूयाज्ज्यायान् जयादे ! क्षितिमतिधृतिदश्चामसोम ! क्रमज्ञ ! ॥

## नाळिकेरफलबन्धः

(यथोक्तभेरुण्डबन्धचित्रवामचरणग्राहितः)

दीर्घायुर्जयचामराज ! भवतो भूया[2]ज्जयाधारभू-
स्त्वं जातस्तव वर्ष्मगो भव[3]दजः श्रीश्रीधराराधक ! ।

---

[1] हे प्रभो ! विधिनिधिरित्यादिविशेषणपञ्चकसहितः स धीदः—वागीशभगवान् ते सर्वदिक्ष्वपि शिवं दद्यात् । हे ईश ! हे जयादे—जयपूर्व, चामसोम ! श्रीशादेशानुशास्तुः—श्रीशाज्ञापालस्य । शिता पृतना यस्य स शितपृतनः—शिक्षितसैन्यः, तस्य । शस्तशक्तेः, त्वत्तः ज्यायान्—वरिष्ठः, को भूयात् । न कोऽपीति भावः.
[2] जयस्य विपुलं स्थानम्. [3] अजः—विष्णुः.

मत्वा त्वां विविचारमायतभुजद्वन्द्वं युयुत्सुं[1] सुदी-
र्घोक्षाक्षाऽ[2]ममदीक्षणा गुरुगुणा धीरा धराऽऽ[3]धीर्जह्रौ ॥

ह्रौ

र्जे

ऽऽधी

धी रा ध

णा गु रु

क्ष दी [2]म

दी र्घो [2]क्षा

त्[2]सुं [2]युः [2]न्द्वं

भु ज द्व

त य मा

म् वि[2] चा र

[2]त्वा म क

ध [2]रा ध

[2]श्री जः द

गो भ व

र्मे [2]व व

जा तः स्त

स्त्वं भू र

ज या धा

त्

---

1 सुदीर्घोक्षाः--दूरदर्शिनः विद्वांसः, तेषु अक्षिणी यस्य स सुदीर्घोक्षाक्षः तस्य संबुद्धिः--सुदीर्घोक्षाक्ष! इति नृपसंबोधनम्. 2 ममकाररहितं दीक्षणं यस्यां साऽममदीक्षणा। ममतां त्यक्त्वा केवलं भगवत्प्रीतये यष्टारः भूम्यां बहवस्सन्तीति भावः. 3 जयचामराजः मां रक्षतीति विश्वस्य, धरा स्वस्य सर्वाः आधीः जह्रावित्यर्थः.

## नाळिकेरबन्धः

(यथोक्तभेरुण्डबन्धवामचरणग्राहितः)

[1]दीर्घायुस्त्वमनामयो जयलसच्चामेन्द्रचन्द्रक्षमा-
मेतां तां विविचारमुत्सवकुलस्फीतां यदोः रञ्जय ।
गेयोऽसि त्वमतीव नाम समदृङ्न त्वत्समो युक्तकृत्
[2]घातं तं ततदीर्घमाशारशमाधारे करेऽधाः ! यतः ॥ १७ ॥




श्रीः

[1] पद्यार्थः स्पष्टः । यदोरुत्सवकुलस्फीतामित्यनेन यदोर्धर्मप्रभुत्वादिगुणाः व्यज्यन्ते. [2] युक्तकृत्त्वं समर्थयति घातं तमित्यादि चरमचरणेन.

शारदराकाक्षणदा-
विधुरिव निघ्नन् क्षणाद्भुवस्तापम् ।
कुवलयसुखमभिवर्षन्
भुवमव जयचामभूपते! सततम् ॥ १८ ॥

क्षोणीशूरधरेशभद्रसदनालङ्कारवाग्देवता-
भाण्डागारसुधीप्रकाण्डपदभाक् स्वर्णाद्रिवंशोद्भवः ।
सत्यागारगुरूत्तमान्वयधनी श्रीवाससद्देशिका-
चार्यस्ते जयचामभूधव इमाःप्रायुङ्क्त पद्याशिषः ॥ १९ ॥

तिरुमले–सत्यागालं, श्रीनिवासदेशिकाचार्यः.

## श्रीचामराजेन्द्रविजयोत्सवाशीर्वादः

यद्यत्कर्म विरच्यते प्रतिफलापेक्षां विना सर्वदा
तत्तत्कर्म विरच्यतां न हि सुखैर्दुःखैर्भवान् लिप्यते ।
एतेनैव पथा समस्तविषयान् भुक्त्वापि पूर्वे नृपा
बद्धत्वं समुपागता न किमपि श्रीचामराजप्रभो ॥ १ ॥

बालोपि स्थविरत्वमेत्य सुगुणैस्सर्वप्रजारञ्जकैः
पूज्यत्वं समुपेहि देववदिह ब्रह्माण्डभाण्डोदरे ।
प्राधान्यं गुणवत्सु लिंगवयसोर्नास्त्येव यस्माद्गुणाः
पूजास्थानमिति प्रथा सुविदिता चामक्षमाधीश्वर ॥ २ ॥

प्रज्ञां वृद्धसमागमेन विनयं विद्यावशेनाऽऽर्जयं-
श्चक्षुष्मत्त्वमुपेत्य चारनिवहैर्दूरीकृताहंकृतिः ।
राज्यं पालय पूर्वराजचरितान्यादर्शवद्भावयन्
ख्यातिं स्थापय दिक्तटेषु दशसु श्रीचामराजप्रभो ॥ ३ ॥

कामादिषड्वर्गनिकृन्तनेन
कृत्वा नितान्तं जयमिन्द्रियाणाम् ।
स्वधर्मनिष्ठापरिनिष्ठितस्त्वं
शाधि प्रजाश्चामनृपालमौळे ॥ ४ ॥

अधर्मसंयुक्तमनर्थहेतुं
क्रियाकलापं परिहृत्य दूरे ।
राष्ट्रं स्वकीयं परिपालय त्वं
रघुर्यथा चाममहीमहेन्द्र ॥ ५ ॥

काव्यकलानिधि—चिदम्बरशास्त्री.

# श्रीवाणीकर्णाभरणम्.

कल्याणं कलयत्वनाविलकलासाकल्यमुल्लासय-
न्त्यामूलं, कमलासनस्य ललना श्रीकल्पवल्ली सताम् ।
खेलन्ती ललितं, मरालमहिलामारुह्य नीलालको-
न्मीलन्मल्लिमिळन्मिळिन्दबहुळा धृत्वा करे वल्लकीम् ॥

व्यवस्यामि स्तोतुं कतिपयपदैस्त्वां जडमतिः
शिशुं मातस्तन्मा हसिषुरवनौ मां कृतधियः ।
वितीर्य द्राग्दिव्यां गिरमव तवाङ्घ्र्योर्निपतितं
प्रसूस्सोढुं नैव प्रभवति हि सूनोः परिभवम् ॥ १ ॥

समुद्यद्द्योरत्नप्रचुरतररोचिः परिभव-
प्रसङ्गौत्सुक्यं ते दधदधरिताब्जं पदयुगम् ।
प्रयच्छत्वत्यच्छां मतिमतितरां सत्परिचितं
निहत्यान्तर्ध्वान्तं मम विधिपुरन्ध्रि ! द्रुततरम् ॥ २ ॥

त्वदीयाङ्घ्रिप्रष्ठप्रचितपरिचर्याप्तजनुषः
प्रसादाख्यस्याम्ब ! प्रबलतरपुंसः परिचयात् ।
मतिर्मेऽन्तर्वत्नी, सति पथि च रक्ता प्रचरितुं
कृपायास्ते साक्षात्प्रजनयतु सच्छ्लोकपृथुकान् ॥ ३ ॥

विनम्रस्वर्नारीचिकुरभरजाग्रत्सुरतरु-
प्रसूनप्रत्यग्रप्रसृमरमरन्दार्द्रिततरा ।
स्मृता मातः ! प्रातः प्रतिदिवसमंहः प्रशमने
द्वयी जाग्रत्यङ्घ्र्योर्भविकमधिकं मे वितरतात् ॥ ४ ॥

समिन्धामुत्फुल्लस्थलकमलधामैकदमनः
सदाचार्यो धार्योऽयमपृथुकभासां हृदि सदा ।
प्रनृत्यन्सुत्रामप्रमुखसुरमूर्धस्वविरतं
त्रयीवेद्यो हृद्यस्तव पदघृणीनामरुणिमा ॥ ५ ॥

समाराध्ये वेधः पुरहरमुरारिप्रभृतिभिः
सुरैस्सर्वैर्भारत्यनणुमणिमञ्जीररसितैः ।
पदे ते श्रुत्यन्तैः परिचयमजस्रं विदधती
मदीयं नृत्यास्तां रसनमिह रङ्गं श्रितवती ॥ ६ ॥

प्रतिस्पर्ध्युद्बुद्धैश्चरणयुगळं शोणनाळिनैः
विधातुस्सीमन्तिन्यनिशमधिपानां च हरिताम् ।
प्रशास्त्रप्रत्यग्रां तव जननि ! साम्राज्यपदवीं
वहत्वाश्रित्योच्चैर्मम हृदयभद्रासनमिदम् ॥ ७ ॥

जगज्जन्मस्थेमप्रलयकृदनिर्वर्ण्यगरिमा
मुरारिश्रीचक्रप्रतिनिधिररातिप्रमथने ।
विदारे प्रत्यूहक्षितिधरवराणां पविरसौ
स्फुरत्वन्तस्सारस्वतचरणराजश्शुभकरः ॥ ८ ॥

दधद्विष्वद्रीचीस्स्वयमाविकृतीर्ब्राह्मि ! रुचिभिः
तमः कृत्स्नं जक्षद्धृदयकुहरस्थं जनिमताम् ।
तवाम्नायस्तोमोच्छ्रितशिखरदीव्यन्मणिमय-
प्रदीपश्चिद्व्याप्यां पदकमलसम्राट् स्फुरतु मे ॥ ९ ॥

स्फुरत्क्षुद्रभ्रभ्रप्रतिफलननीहारकणिका-
सगोत्रैर्मुक्तौघैर्मधुरमुडुराजभ्रमकरम् ।
सदाशिञ्जानं त्वच्चरणमणिमञ्जीरमसकृत्
स्मरन्मुख्याम्यंब ! द्रुहिणमुखलास्यैकरसिके ! ॥ १० ॥

नखेन्दूनां लक्ष्मीस्तवचरणपाथोरुहयुग-
श्रियं रुन्धे नैवह्यपि तु परिपुष्णाति कुतुकात् ।
जगन्मातस्सत्त्वप्रकृतिमुपगत्यैव भवतीं
जहीतस्ते बुद्धिं सपदि, चिरविद्वेषकलुषाम् ॥ ११ ॥

अलक्तेन द्योसद्द्विरदवरकुंभस्थलगल-
त्स्फुरत्सिन्दूरश्रीहरणनिपुणनाङ्घ्रिनळिनम् ।
भृशं मुक्तात्रातैररुणमह! मञ्जीरनिचितैः
हसत्यभ्रं सान्ध्यं निबिडमुडुवृन्दैर्जननि! ते ॥ १२ ॥

समारोढुं हंसीं निजगतिविलासेन विजितां
ह्रिया नम्रां कामं सपदि, परमेष्ठिप्रणयिनि! ।
सलीलं साकूतं सदयमुरुपादाङ्गदरुतै-
रुदञ्चन्तं किञ्चिच्चरणमुपयाम्येकशरणम् ॥ १३ ॥

अलक्तस्संसक्तः प्रमृदितशशास्रग्वररुचिः
तवाङ्घ्र्योरत्यन्तं स्फुरति चतुरास्यप्रियतमे! ।
अनूरागस्सर्वैः श्रितजनविपत्तिप्रशमने
सदा जाग्रन्मूर्तस्स्वयमिव हि सिद्धः प्रकृतितः ॥ १४ ॥

मदीये जिह्वाग्रे तव चरणसंवर्णनपरे
पदद्वन्द्वं देवद्रुमकिसलयश्रीधरमिदम् ।
लिखत्वाखेलच्च प्रणवमपि भारत्यतिजवा-
दनालोच्याऽदृष्टं जननि! घुणवर्णक्रमनयात् ॥ १५ ॥

विराजेते जङ्घे तव जननि! मञ्जिम्नयजननीं[1]
शरध्योः कुर्वत्यौ विधिरमाणि! कामस्य नियतम् ।

---

1 आक्रोशेनध्वनिः

तटित्सध्रीचीने सरसतरलास्यैकसमये
यमीन्द्राणां चेतस्स्वपि किमपि शक्ते रचयितुम् ॥ १६ ॥

तवाङ्घ्रिभ्यामात्मध्वनिविजितहंसीकुलमणी-
तुलाकोटिभ्यां श्रीद्रुहिणवरवर्णिन्यनुपमम्[1] ।
अभिव्यङ्क्तो भावाल्लँलितमधुरान्नर्तनविधा-
वुभे जङ्घे कामागमपरमसिद्धान्तमहितान् ॥ १७ ॥

विधेर्धर्म्यादारास्तवचमसृणोरू विजयिनौ
विवर्तौ वैरिञ्चिप्रचितसुकृतस्याञ्चिततमौ ।
परीणाहं प्राप्तौ कमपि नवकार्तस्वररुचौ
भृशं वार्तं मह्यं सदयमनवद्यौ वितरताम् ॥ १८ ॥

उभौ रम्भां जम्भद्विषदुपवनान्ते सुरवधू-
कराब्जानां वाचालितवलयमासेचनचयैः ।
सुजातामूरू ते विपुलजघनाभोगपुळिना-
दुपारूढावम्बानिशमतिशयाते त्रिजगताम् ॥ १९ ॥

जगस्तम्भावम्भोरुहभवनिवम्बिन्यतितरां
गिरां दूरे सन्तौ तव मकरकेतोर्विजयिनः ।
शरद्वार्दश्रीभृद्वसनकमनीयौ विधिहृशां
उभौ भव्यायोरू भगवति! भवेतां मम शिशोः ॥ २० ॥

नितम्बस्ते काञ्च्या खचितनवरत्नप्रकररु-
ग्झरप्रेङ्खद्भङ्गोद्गमसुभगयाऽलङ्कृततरः ।
समाकीर्णं मेरुं द्युमणिकिरणाल्याम्ब! युगप-
द्भमन्त्या वर्णौघानधरयति पादप्रहरणात् ॥ २१ ॥

---

[1] अनुपममिति क्रियाविशेषणं.

मणीकाञ्चयुद्गच्छच्छविनिचयपृक्तं च जघनं
समुद्यद्भिर्हृद्यैर्दिवि दिविषदांशानघनुषः ।
निषक्तं रोचिर्भिस्त्रिदिवसरितश्चारुपुळिनं
गळे गृह्णन्नम्ब! व्यपगतकृपं द्रावयति ते ॥ २२ ॥

पयःपारावारोद्भवबहळफेनौघधवळं
समन्तादङ्कूरैश्छुरितमहिरत्नोत्थमहसाम् ।
नितम्बस्ते स्पर्धी सुरकरटिमूर्ध्ना कबळितः
मणीकाञ्चित्विड्भिर्जयति बत! मन्थक्षितिधरम् ॥ २३ ॥

यदध्यास्ते स्वान्तं स्मरशरभृशार्तस्य कामितुः
विरिञ्चेर्जाये! ते स्वनदनघवैडूर्यरशनम् ।
घनं कामं श्रीमज्जघनमिभकुम्भप्रतिभटं
शिशुभ्योऽस्मभ्यं तत्प्रवितरतु माङ्गल्यमतुलम् ॥ २४ ॥

असामान्यं मान्यं सदनमिदमाकल्पसुभगं
विलासानां स्वैरं द्रुहिणगृहिणि! श्रीरतिपतेः ।
मनोज्ञं ते क्षौम्या प्रविरळहिमानीसहभुवा
जघन्या वृत्तीर्मे स्थगयतु गिरां देवि! जघनम् ॥ २५ ॥

नभोभिन्नं सिद्धत्यनितरगशब्दाश्रयतया
पृथिव्यादिभ्यो यत्तदह! तव मध्यीभवदिदम् ।
चकास्त्यूह्यं श्रव्यैर्मुखररशनायाः कलरवैः
जगन्मातः! पद्मासनमुखमणीपञ्जरशुकि! ॥ २६ ॥

तवाङ्गानां कूलोद्गळदतुललावण्यबहुळ-
प्रवाहाणां कामप्यनणुपरिपुष्णाति सुषमाम् ।
अदृश्यस्सन्मध्यस्सुदति! बत धातुः श्रुतिमयि!
प्रकाशं विद्वेष्टि ह्यनिशमुपकुर्वन्ननुपधि ॥ २७ ॥

द्वयोर्मूर्तौ [1]भागः प्रभवति तरामन्तरगतः
स्वयं लब्धुं मध्यव्यवहृतिमिति व्याहृतिमयि ! ।
प्रसिद्धं सत्येवं कथमसादिदं मध्यमभवत् ?
त्वमेवाम्बास्माकं व्यपनय महासंशयमिमम् ॥ २८ ॥

सदेवासीत्सोम्येदमिति निगमान्तेन विहितं
विभीतं यच्छून्यं शरणमभजत्त्वां जननि ! मे ।
द्रुतं मध्यत्वेन त्वमपि परिगृह्यादरभरात्
तदत्यन्तं रक्षस्यहह ! निरुपाख्या तव कृपा ॥ २९ ॥

सुरस्रोतस्विन्या त्वयि च सहयुध्वन्यविरतं
हसन्त्या ते मूर्त्यो श्रियममलकर्पूररजसाम् ।
सरः किञ्चिन्नाभ्याह्वयमतिगभीरं स्फुरति यत्
ततस्त्वां जानीमो भगवति ! सरस्वत्यभिधया ॥ ३० ॥

समुत्खेलन्नीलोपलशिखरिबालोर्मिनिकरैः
कळिन्दाद्रेर्नन्दिन्यपि सुभगरोमावळिमिषात् ।
ह्रदे नाभीनाम्नि प्रसृतबहुलावण्यसलिले
मुदा सङ्क्तुं त्वां श्रयति किमु दिव्यामिव नदीम् ॥ ३१ ॥

सरस्यामस्यां स्युर्विकसदरविन्दानि, सरसं
मरन्दं पास्यामि प्रमुदितहृदेषां च निभृतम् ।
विभाव्यैवं मातर्भ्रमरमृगदृक्संहतिरियं
सदानाभ्यभ्यर्णं सरति तव रोमाळ्युपधिना ॥ ३२ ॥

स्तनद्वन्द्वेऽन्योन्यं निबिडिततमे वैरिगिरिश-
क्षितिभ्रेन्द्रभ्रान्त्या तव रतिपतिर्नाभिकुहरे ।

---

[1] भाग इत्युक्त्या, द्वयोर्मध्यत्वस्याकाशादौ सत्वेऽपि न क्षतिः,

निलीनो गौराङ्गे! श्वासीति सभयं, धूमकलिका-
तदन्तश्शोकाग्नेः स्फुरति, न तु रोम्णां ततिरियम् ॥ ३३ ॥

तवाम्ब! श्रीरङ्गे वपुरुपवने श्रद्दधदसौ
अगाधां मध्यस्थां निधिममितधाम्नां सुमशरः ।
विशुद्धां स्वां वापीं रचयितुमनाश्शैवललवान्
उदास्थत्तीरे, ते प्रविदधति रोमावळिधियम् ॥ ३४ ॥

सुमेषोरक्लिष्टैरभिनवतरैस्तत्त्वशिखरैः
स्फुरन्ती, सारस्यं किमपि परिपाट्या विदधती ।
अपूर्वा काचिन्नय्यभजदजजाये! जननि! मे
त्रिविद्युन्मूर्त्या च त्रिवलिरिति नाम्ना च भवतीम् ॥ ३५ ॥

कृशं स्वाभाव्येन स्तनजघनभारात्कृशतरं,
विधेरक्ष्णां पाताद्युगपदुदरं ते कृशतमम् ।
त्रयेणेवाऽऽबध्नाद्व्यथितहृदयो मा नशदिदं
क्रमेणेत्युत्पश्यन्कनकमयदाम्नां मनसिजः ॥ ३६ ॥

उरः कृत्स्नं व्याप्याप्यनधिगततृप्तिस्तनयुगं
विवर्धिष्णुस्पर्धित्रिदशसरिदर्णोजमुकुळैः ।
समुच्छ्रित्य स्वेच्छं हसदसकृदाद्रिं स्मररिपोः
कृषीष्टाभीष्टं मे विधिमहिषि! तुष्टं स्तुतिगिरा ॥ ३७ ॥

हरं दुर्वर्णोर्वीधरशिखरमेकं गिरिजया
समध्यास्योद्भ्रान्तं भृशमभिबुभूषुर्निजरिपुम् ।
अभान्त्सीत्प्रद्युम्नः किमु सुभगसौवर्णशिखरि-
द्वये मातर्नीलोपलनिलययुग्मं निरुपमम् ॥ ३८ ॥

विशीर्णे लावण्यद्रविणमनणीयः प्रणवमय्य-
नङ्गः प्रत्यङ्गं विधुमुखि! समाहृत्य कुतुकात् ।

उरःप्रान्ते स्वान्तं झटिति हरतोर्हैमघटयोः
स्वयं निक्षिप्योर्ध्वं व्यधित जतुमुद्रां किमसिताम् ॥ ३९ ॥

समुत्तुङ्गं दुग्धोदधिपृथुतरङ्गं प्रतिफल-
त्समग्रप्रालेयद्युतिमलिनिमाकल्प्यशिरसम् ।
स्वयम्भूभामिन्याश्चतुरमनुकर्तुं स्तनयुगं
धुनीतां मेऽत्यन्तं हृदयकुहरस्थान्धतमसम् ॥ ४० ॥

स्फुरद्विद्युद्वल्लिव्रजसहजवज्रस्रगुदित-
द्युतिस्रोतोनृत्यद्रुचिरतरवीचीव्यतिकृतम् ।
स्तनद्वन्द्वं क्षौमान्तरितमसिताम्भोजनयने !
परिष्वक्तं बन्धुं कलयति हिमाद्रिं द्युसरिता ॥ ४१ ॥

परिद्योतिप्रत्नेतरमरकतस्रग्व्यतिषज-
न्महामुक्ताहारः स्तनतटमटत्यर्घविधुरः ।
समुन्निद्रस्वर्गद्रुमकुसुमदाम्नां समुदयं
श्रिया न्यक्कुर्वाणोऽध्युषितमदवत्षट्पदगणम् ॥ ४२ ॥

पवित्रात्त्वद्गात्रान्मधुरिमसुधाब्धेरसदृशः
समुत्थस्सुस्निग्धो विजितसितपाथोजमुकुलः ।
सरस्वत्यौन्नत्यं किमपि गमितः कण्ठमिषतः
क्वणन्मञ्जु, श्रेयस्समरविजयशङ्खो दिशतु मे ॥ ४३ ॥

मनागालक्ष्याभिः कतिपयशिराभिर्वलनतः
वधूटि ! स्पष्टस्ते मरकतशलाकौघरुचिभिः ।
समुन्नम्रा ग्रीवा जयति कलहंसीं द्युमरितः
सुजातां काभिश्चित्कमललतिकाभिः परिवृताम् ॥ ४४ ॥

करेणैकेनाच्छस्फटिकमणिमालां गणयता
परेण श्वेताब्जं परिमळमिळद्भृङ्गमहिळम् ।

शुकीमम्बान्येन, श्रुतिजटिलतालीदळगणं
तुरीयेणाबिभ्रत्यनिशमपि भव्याय भवका[1] ॥ ४५ ॥

चतस्रो बाहाः किन्नुमृदितमृणाळ्यः, किमथवा
सुनासीरोद्यानद्रुमविटपराज्यस्सुरुचिराः ।
स्वयम्भूसुभ्रूस्ते स्फुरदमृतवर्त्यः किमु दृशोः
शुभाश्शाणोल्लीढस्फटिकमणियष्ट्य[2]स्स्युरथवा ॥ ४६ ॥

किमुस्तम्भाश्शुम्भत्स्मरसुभगसौधस्य महतः
चतुर्भ्यः किं दोर्भ्यः प्रति मुराभिदस्त्रातुमखिलान् ।
समाम्नाया मूर्ताः किमु, समपुमर्थाः स्विदथवा,
भुजा भ्राजन्ते ये युवति! तव राजीवजनुषः ॥ ४७ ॥

गुरुं सत्वात्मानं चिरतरमुपास्यापि कुटिला
जहाति स्वान्रागान्कथमपि हिनैषेति, कृपया ।
निधायाङ्के वीणां जननि! मुहुरास्फलननिभा-
त्स्वयं तन्त्रीद्वारा गमयसि किमन्तर्निजगुणान् ॥ ४८ ॥

अवापं नैलिंम्पद्रुमविटपबुद्ध्या सरभसं
पराजेष्यभ्यर्णस्फुरदतुलकम्बोः कलरवैः ।
इतीवस्कन्धे ते भगवति! शुकी भूरिजडिम-
द्रुतस्तब्धाकारा समजनि शुचा पाण्डरवपुः ॥ ४९ ॥

असद्वादाभ्यासोत्सुकहृदयदग्धैः कतिपयैः
वृथा मा कारिध्वं, सफलयत जन्माप्यसुलभम् ।
समालम्बध्वं द्राक्छ्रुतिपथमिमं मे प्रियसुताः!
शयेनेत्थं प्रत्याययसि किमु ते पुस्तकजुषा ॥ ५० ॥

---

1 भवका—आशिषि वुन् तत इत्वनिषेधः.   2 यष्ट्य इति बह्वादित्वान्ङीष्.

परारूपिण्यास्ते किमपि समुपास्यं न भवती-
　　त्यवेमः श्रीवाणि ! त्वमपि जपमालां कलयसि ।
समे जीवात्मानो ! जपत भवभीतिप्रहतये
　　समीक्ष्यापीमामित्यवगमयितुं भूरिकृपया ॥ ५१ ॥

सिताम्भोजाक्षस्रक्छुकपृथुकतालच्छदभृतः
　　करास्ते व्याकोचारुणनळिनभासोऽञ्चिततमाः ।
प्रकोष्ठैर्बिम्बोष्ठि ! क्वणननिपुणैः कङ्कणगणैः [1]
　　नखैरर्धेन्दुश्रीहसनकुशलैः शं विदधताम् ॥ ५२ ॥

भृशं रागालापैः परवशयतीयं श्रुतिसुखैः
　　त्वदुत्सङ्गे मातः ! प्रियदुहितृकल्पामणिमयी ।
वराकच्छप्युच्चैः नयनसुभगा पल्लवचयैः [2]
　　परीता भ्राम्यद्भिस्सततमनुगायद्भिरळिभिः ॥ ५३ ॥

मनोज्ञं गायन्तीं स्फुरदुपरिरत्नोर्मिकतया
　　समिन्धानां कम्रैर्मृदुकररुहैर्व्यापृतनखैः ।
कुचोदञ्चद्वीणागुणगणरणत्कारनिपुणैः
　　मनागुन्नम्रभ्रूमधुरतरवक्त्रां हृदि दधे ॥ ५४ ॥

धरा कृत्स्ना मूल्यं न भवति च यस्यायमधरः
　　ससारः श‍ृङ्गारद्रुमनवकिसालः किमतुलः ।
परीपाकात्ताम्रं स्वयमधरयन्बिम्बमनिशं
　　सुधासारोद्गारी तिरयतु गिरां देवि ! दुरितम् ॥ ५५ ॥

तिरश्चीना किन्नु स्फुरति मणिदीपस्य कलिका
　　समुत्तुङ्गे श‍ृङ्गे स्मरविहृतिभूमृत्यविरतम् ।

---

[1] कङ्कणगणैरिति करणम् .　　[2] वीणायाः पल्लवितत्वं कविसमयसिद्धम् .
[3] ऊर्मिका-अङ्गुलीयकम् .

तरङ्गैस्सौन्दर्यामृतजलनिधेर्विद्रुमलता
बहिर्नीता मातर्दरमधरलेखा किमु तव ॥ ५६ ॥

रदानां सन्दोहस्तव सुरवनीकुन्दमुकुळ-
व्रजानाजौ जिष्णुर्जननि! जगतां सामजगते ।
निजार्धे सञ्जग्धः प्रसरदरुणिम्नाऽधरभुवा
हुवानान्बीजौघानुपहसति किं? दाडिमफले ॥ ५७ ॥

प्रसिद्धयेच्छुक्तिश्चेत्क्वचन मधुरा विद्रुममयी
स्फुरेयुस्तस्यां यद्यचिरतरमुक्तास्सुरुचिराः ।
तदा ताम्रौष्ठाभ्यन्तरलसितदन्तास्तव शुभाः
श्रियं तासां बिभ्रत्वमरवरवन्द्याङ्घ्रिकमले ॥ ५८ ॥

जितज्योत्स्नासारश्शुचिदशनहासस्सुवदने!
दरं निर्यन्दुग्धोदधिसुभगफेनप्रतिनवः ।
तवौष्ठाभ्यां, श्रेष्ठं न गणयति शोणं सरसिजं
मदादध्यासीनं सरसि कलहंसं कथमपि ॥ ५९ ॥

कपोलौ माहेन्द्रद्विरदरदखण्डद्युतिधरौ
निरर्घौ श्रीरत्या विहृतिमुकुरौ मुग्धमधुरौ ।
नितान्तं द्योतेते प्रवरमकरीपत्रनिकरैः
वितन्वानौ मीनध्वजविजयपत्राक्षरधियम् ॥ ६० ॥

प्रदीप्तौ प्रत्युप्तप्रवरनवरत्नद्युतिझरैः
श्रुतिभ्यां ताटङ्कौ भृशमनुगृहीतौ करुणयौ ।
[1] कपोलौ कुर्वाते प्रतिफलनतस्ते ह्युभयतः
प्रसूरन्तर्लीनस्थलकमलनीहारसुहृदा ॥ ६१ ॥

---

1 कपोलौ कर्मीभूतौ.

वलक्षर्क्षश्रीकं तिलसुमसदृक्षेषदुपरि-
स्फुरन्नासाग्रालम्ब्यमलतममुक्ताफलमिदम् ।
निषक्तं सद्दन्तच्छदरुचिभिरिन्दुं जलनिधे-
रुदीतं सन्ध्याभ्रप्रचयपरिताम्रान्नमयति ॥ ६२ ॥

समुन्मीलन्नीलोत्पलदळगळग्राहि युगळं
सदा कर्णाभ्यर्णप्रविहरणभूरिप्रणययोः ।
तवाक्ष्णोः श्रीवाणि! द्रुतमरुणकोणस्फुरणयोः
घृणापूर्णं, रक्षणं द्विगुणयतु कल्याणमहसोः ॥ ६३ ॥

सरस्यामेकस्यां त्वयि नवरसायामविरतं
विहर्तुं किं स्वैरं कुसुमशरकेतोर्निपतितम् ।
असामान्याभिख्यं शफरमिथुनं विभ्रमशतैः
हरद्वेधस्स्वान्तं लसति किमु नेत्रद्वयमिषात् ॥ ६४ ॥

कृपापारावारं तरळतरकल्लोलवहळं
निवासं श्रीदेव्या निधिममितधाम्नामनुपमम् ।
अजस्रं श्रुत्यन्तस्फुरणरमणीयं नयनयोः
मनाक्छोणं वाण्याश्शरणमिह कोणं तव वृणे ॥ ६५ ॥

सहर्षं पीयूषं किरति विषमेषोरुपनिष-
[1]त्सरस्वत्यन्तर्धिं गमितमतिरस्यं सपदि ते ।
चिराद्वेदाभ्यासोत्सुकहृदयमम्भोजभुवम-
प्यरं कुर्वन्श्रृङ्गारिणमसकृदक्ष्णोः परिचयः ॥ ६६ ॥

विधुं ध्यायं ध्यायं कुवलयममायं श्रुतिदिशा
प्रसादात्तस्यैवं समभजत सायुज्यमपि किम् ।

---

[1] सरस्वति–समुद्रे.

यतो मातर्वक्त्रे विजितशतपत्रेऽक्षियुगळ
तनोतीमां बुद्धिं, किमिव न दुरापं श्रुतिपथे ॥ ६७ ॥

शमस्सामग्र्येणाङ्कुरित इव नेत्रे स्फुरति ते
कदाचिच्छृङ्गारः, क्वचन समये भूरि करुणा ।
रसानां साभाग्यं मुकुर इव सन्दर्श्य विशदं
वितन्वन्नेत्रान्तैः किमपि हृदि मातर्विजयते ॥ ६८ ॥

दृशोरादौ लक्ष्मीं तव जननि! मा द्राक्षुरखिला
इतीर्ष्यान्धे कामं प्रकृतिकुटिले मुग्धलतिके ।
शयाते तिर्यग्द्रागुपरि शफरीदृक्क्रिमु हठात्?
पिधातुं नेशीरन्कुटिलहृदया वस्तुसुषमाम् ॥ ६९ ॥

तवाष्टम्याः स्पष्टं विजयि मिहिकांशोश्शुभतनोः
निटालं निष्टापप्रकटसुषमाष्टापदमयम् ।
महामूल्यं मन्ये फलकमुपवेष्टुं प्रविततं
श्रियोऽत्यन्तं नृत्याच्छ्रमभरजुषः प्रत्यवयम् ॥ ७० ॥

अरम्यं नैवास्ति प्रकृतिविहितं वस्तु किमपि
द्विषन्त्यज्ञाः कामं सुभगमपिनैल्यं कतिपये ।
गिरां देव्या गृह्यो यदहमिति तान्बोधयदिव
स्फुरत्युच्चैः फाले मृगमदललामैकमतुले ॥ ७१ ॥

घनश्यामंकैश्यं भ्रमरनिकुरम्बभ्रमकरं
सुमस्रग्भिस्सान्द्रं स्रवदुरुमरन्दाभिरनघे! ।
दळानां बृन्दं ते भृशमसितधाम्नामविरळं
प्रतीमस्सौन्दर्यत्रिदिवलतिकायास्सकुसुमम् ॥ ७२ ॥

किरीटं ते गारुत्मतदृषदुदञ्चद्रुचिझरै-
र्हरिद्राक्षीणां हरितपरिधानैरिवनवैः ।

मनोज्ञान्यङ्गानिप्रणतसुरधेनो! स्मरधनु-
भ्रुवस्तेऽलङ्कुर्वच्छमलमखिलं मे दळयतात् ॥ ७३ ॥
सुपर्वाध्यक्षा अप्यविरतमृमुक्षप्रभृतयः
प्रतीक्षन्ते मातर्यदि तव कटाक्षं स्तुतिशतैः ।
अहं रक्षाहेतोरसुभगगिरानक्षरमुखः
स्तुवन्निर्मन्दाक्षं कथमिवलभेयाक्षवशगः ॥ ७४ ॥
गिरं त्वामासाद्य प्रयतनशतैर्वाथसुकृतैः
स्तुवन्त्यन्यद्दैवं किमपि फलमास्थाय कवयः ।
नयं ते तद्धेतोरिति न हि विदन्त्यम्ब! नियतं
नरः कः क्रीणीयादिहविबुधगव्याऽभिलषितम् ॥ ७५ ॥
असारं संसारं रचयतु ससारं मयि पत-
न्नपाकुर्वञ्शोकं किमपि विदधत्सौख्यमनिशम् ।
दयासिन्धुर्धुन्वन्दुरितमपि लोकेशललने!
तवापाङ्गो गङ्गाझर इव पवित्रश्च शिशिरः ॥ ७६ ॥
सपर्यां नाकर्षं सकृदपि विशुद्धेन मनसा
व्यधामज्ञानान्धः प्रचुरमपचारं तव मुहुः ।
दयेथाश्चेन्मातर्मयि वृजिनसन्दोहसदने
कृपायाः पारम्यं निरवधि विभायात्स्फुटतरम् ॥ ७७ ॥
अहं काळीदासः किमनुपमवाक्छङ्करगुरुः
मुनिर्दुर्वासाः किं जननि! जनिमूकः किमथवा ।
कथङ्कारं राकारजनिकरवक्त्रे! गिरधिपे!
स्तुयां पद्यैः स्वाद्यैर्ललितललितैर्मन्त्रमहितैः ॥ ७८ ॥
अलं शस्त्राभ्यासैरलमहरहस्तत्प्रवचनैः
अलं वादैश्शुष्कैः सदसि सुधियां वापि विहितैः ।

प्रसादस्ते न स्याद्यदि सकलमेतद्धि विकलं
सचेद्भक्त्या साध्यो वितर सुदृढां तां जननि! मे ॥ ७९ ॥
जगत्यस्मिन्दैवादजनिषि जडः किन्नुकरवै
तदर्थं मुक्तानां त्वयि मुहुरहं रोदिमितमाम् ।
मनागप्यम्बाया द्रवति हृदयं नो यदि तदा
परीवादस्स्यात्ते, जनुषि मम नैष्फल्यकलनात् ॥ ८० ॥
रुदन्स्तन्यं पोतः पिबति जगतीति श्रुतमिदं
यथार्थं कुर्वीथा मयि जननि! नाथाम्यनुनयैः ।
निकृष्ये किं मूकात्? अभिलषसिमूकत्वमिह चेत्
तथेमं कृत्वाद्राग्रसय तव वीटीदळरसम् ॥ ८१ ॥
अरीन्कामादीन्मे हृदयकुहरारण्यशिखिनः
सदा सौजन्यादिद्रुमनिवहदाहैककुतुकान् ।
दृगन्तस्निग्धस्ते भृशमचिरधाराधर इव
प्रहण्यान्नैर्घृण्याद्द्रुहिणहरिणीदृग्गुणनिधे! ॥ ८२ ॥
प्रसूने त्वत्पादप्रवरमणिपीठस्य विलुठन्
विशीर्णे दामभ्यः क्वचिदहमपि स्यां यदि कृमिः ।
सृजेयं रक्षेयं जगदपि हरेयं च निखिलं
प्रतिब्रह्मादिभ्यो नियतमरविन्दैकनिलये! ॥ ८३ ॥
समौ योगक्षेमौ मम बिभृहि वागीश्वरि! शिशोः
समर्प्यात्मानं त्वच्चरणकमले भक्तिभरितः ।
भवन्भव्योबन्धुर्निरुपधि समेषां मधुलिहां
स्तुवन्गायन्नृत्यन्समयमपनेष्यामि मुदितः ॥ ८४ ॥
सुखेनासं भिन्नं जननि! बहुदुःखं विधिवशा-
दभुञ्जयस्मिञ्जन्मन्यहमतितरां दूनहृदयः ।

निलीये कातर्यात्पदकमलयोस्ते कलयतोः
 जनैर्भङ्गं तुङ्गस्तनभरविनम्रेऽवकृपया ॥ ८५ ॥
विदित्वा शास्त्रार्थान्कमपि भुवि शब्दं स्फुटतरं
 प्रयुञ्जानेभ्यस्त्वं दिशसि कुशलं कामसुरभिः ।
व्युदस्य व्यासङ्गं हृदयकुहरे सान्तमसम-
 प्युपासीनानाञ्चस्फुरसि परमार्थश्चितिमयी ॥ ८६ ॥
चतुश्शृङ्गस्त्रयङ्घ्रिद्विपृथुलशिरास्सप्त च शयान्
 धरन्बद्धस्त्रेधाप्यनिशमधिकं रौति सुमहान् ।
वृषो यो देवात्माऽऽविशदखिलमर्त्यानवगतः
 श्रुतावन्तर्यामी स हि भवसि शब्दस्त्वममृतः ॥ ८७ ॥
समे पश्यन्तोपि प्रसुवमिह पश्यन्ति न तरां
 तथा त्वां शृण्वन्तोप्यहह ! न हि शृण्वन्ति बहवः ।
तनूं यस्मै कस्मै च न सुकृतिने व्याकृतिविदे
सुवासास्त्वं सन्दर्शयसि गृहिणी वात्मगृहिणे ॥ ८८ ॥
त्रयोप्यम्शावाचस्तवहृदयदर्यां विनिहिताः
 न चेष्टन्ते ये तान्विदुरिह मनीषिद्विजनुषः ।
दरीं भित्वा शास्त्रप्रभवमातियोगद्वयबलात्
 वदन्त्यन्ये मर्त्या भगवति ! तुरीयं तव पदम् ॥ ८९ ॥
असाधुभ्यो वाचं पृथगकृषत ध्याननिरताः
 धिया सम्यक्सक्तुं स्वयमिव पुनानास्तितउना ।
गिरं ब्रह्माभिन्नां तदनु तदभिन्नं जगदिदं
 गृहीत्वा सायुज्यं तव जननि ! गच्छन्ति खलु ते ॥ ९० ॥
प्रविश्यान्तर्यद्वद्धुतभुगिह सूर्मीं प्रसुषिरां
 मलं भस्मीकृत्याखिलमपि पुनीतेऽन्तरगतम् ।

विभक्त्यन्ताश्शब्दा मम जननि ! तालुन्यधिगताः
प्रकाशं शारीरं मलमपहरन्तु द्रुततमम् ॥ ९२ ॥

स्वरूपान्तर्ज्योतिर्भुवनजनयित्रि ! स्फुरसि वा-
क्परापायातीताकमलभवकामिन्याधिगते ।
स्वरूपेऽधीकारो व्रजति विनिवृत्तिं च सुतरा-
मिति प्राज्ञाः प्राहुर्जगति तव तत्त्वं * हरिमुखाः ॥ ९३ ॥

वितानैर्वल्लीनां सुममिळदळीनां निचुळितं
परीतं वाप्योच्चैः प्लवरसिकहंसैस्सुभगया ।
लसत्स्वर्णस्तम्भं नवमणिमयं मण्टपवरं
सुखादध्यासीथा भगवति ! मनः कल्पितमिमम् ॥ ९४ ॥

गृहाण स्वर्णद्यास्सलिलमिदमर्घ्याय विमलं
तथा पाद्यायाम्भो भवतु सुभगं यामुनमिदम् ।
नवं कावेर्या अप्यमृतमिदमाचामसरसं
तटिन्यास्ताम्राख्यास्स्नपनविषये स्तात्तव पयः ॥ ९५ ॥

सुवस्स्वैतत्क्षौमं मसृणमनवद्याङ्गि ! निटिले
चकास्तु प्रत्येकं श्रियमनणुपुण्णत्सुतिलकम् ।
अनल्पैराकल्पैरहिमकरकोटिप्रतिभटैः
अलङ्कुर्वेऽङ्गानि प्रकृतिमधुराण्यर्भकधिया ॥ ९६ ॥

अपाकुर्वंस्तापं मलयजविलेपोऽस्तु कुचयोः
स्रजां वज्रैर्गङ्गोल्लासितहिमभूभृत्सुभगयोः ।
इयं मल्लीमाला कलयतु च धम्मिल्लनिलया
रदेभ्यः कातर्याद्वसति तमसीति भ्रममपि ॥ ९७ ॥

---

* हरिमुखाः = भर्तृहरिप्रमुखाः.

सरस्वत्यै लक्ष्म्यै हिमगिरिसुतायै च नम ओं

प्रकृत्यायित्यष्टोत्तरशतपदाळिमभिदधत् ।

समर्चाम्यङ्घ्री ते सरसिजमुखैः फुल्लकुसुमैः

पवित्रैः पत्रैश्च श्रुतिशिखरसंवेद्यचरणे ! ॥ ९८ ॥

प्रदर्श्येते धूपोऽगरुपरिमळैरेष मिलितः

प्रदीपश्चोन्नृत्यन्सुरभिघृतवर्त्यौ स्वरुचिभिः ।

सभक्ष्यं शाल्यन्नं समधुघृतसूपं दधि पयः

फलान्यादेह्यम्ब ! त्वमनुपाधिभक्त्येकसुलभे ॥ ९९ ॥

मुदं ते ताम्बूलं वरपरिमळोद्गारि कलय-

त्वनल्पैः कर्पूरैस्स्फुरतु तव नीराजनाविधिः ।

तवाङ्घ्र्योरत्नौघैः कनकनिकरं भूरिविकिर-

न्नमस्कुर्वे पुष्पाञ्जलिभिरिह सन्तोष्य भवतीम् ॥ १०० ॥

प्रसन्ना श्रीवाणि ! प्रदिश तनयं मे गुणनिधिं

श्रियं विद्यां शक्तिं धृतिमपि च भक्तिं स्थिरतराम् ।

मदीयः पाप्मौघः फलतु मम शत्रुष्वविरतं

सतां दुग्धामिष्टं श्रुतिविहितसद्धर्मसुरभिः ॥

ॐ तत्सत्

शब्दब्रह्मविदग्रचः

कवीश्वरः कृष्णमूर्तिरतिभक्त्या ।

वाणीकर्णाभरणं

वाण्याश्चरणे समर्प्य कृतकृत्यः ॥

———

॥ श्रीः ॥

# श्रौतप्रकाशिका




मैसूरु-श्रीमन्महाराजसंस्कृतमहापाठशाला-सामवेदप्रधानोपाध्यायेन

पुन्नागपुराभिजन-पूज्यरामस्वामिदीक्षितपुत्रेण

नारायणस्वामिदीक्षितेन


प्रकाशिता




मैसूरु

राजकीय शाखामुद्रालये सम्मुद्रिता

१९३९

# श्रौतप्रकाशिकाविस्तृतभूमिका

अयि सहृदयाः गुणैकदर्शिनः परदूषणवाचंयमव्रताः तत्रभवतां सविधे किञ्चिदित्र विज्ञापयामि—

इयं च श्रौतप्रकाशिका उद्गातृपुरुषाणां सप्तसोमसंस्थारूपे यज्ञे कर्तव्यं कर्म प्रकाशयति। उद्गातृपुरुषाश्च —उद्गाता, प्रस्तोता, प्रतिहर्ता सुब्रह्मण्यश्चेति चत्वारः। तेषां च 'सामवेदेनोद्गाता' इति श्रुत्या सामवेदेन यज्ञकर्मकरणं प्रतीयते। सामशब्दार्थश्च 'गीतिषु सामाख्या' इति जैमिनिसूत्रेण विवृतः। सामशब्दवाच्यस्य गानस्य स्वरूपं ऋगक्षरेषु क्रुष्टादिभिः सप्तभिः स्वरैः अक्षरविकारादिभिश्च निष्पाद्यते। (क्रुष्टः प्रथमः द्वितीयः तृतीयः चतुर्थः मन्द्रः अतिस्वार्यश्चेति सप्त प्रधानभूताः स्वराः। अवान्तरस्वरनिरूपणादिकन्तु मत्कृतसामवेदतत्त्वार्थप्रकाशिकायां द्रष्टव्यम्)। स्वरस्य सामनिष्पादकत्वं छान्दोग्ये श्रुतं— 'स ह शिलकश्शालावत्यश्चैकितायनं दाल्भ्यमुवाच–हन्त त्वा पृच्छानीति पृच्छेति होवाच का साम्नो गतिरिति स्वर इति होवाच' इति १-८-३, ४। तथा बृहदारण्यकेऽपि उद्गीथविद्यायां स्वरस्य सामसंबन्धिसर्वस्वस्थानीयत्वं शोभनवर्णस्थानीयत्वं च श्रुतम्—'तस्य हैतस्य साम्नः यः स्वं वेद भवति हास्य स्वं तस्य स्वर एव स्वं' (१-३-१५)। 'तस्य हैतस्य साम्नः यः सुवर्णं वेद भवति हास्य सुवर्णं तस्य वै स्वर एव सुवर्णम्' इति (बृ. उ. १-३-२३)। किञ्च 'अर्थैकत्वाद्विकल्पः स्यात्' (जै. सू. ९-२-२९) इति सूत्रव्याख्यानावसरे अक्षरविकारादीनां सामनिष्पादकत्वं तत्रभवता शबरस्वामिना

वर्णितम् । 'सामवेदे सहस्रं गीत्युपायाः आह—[1] कतमे ते गीत्युपायां नाम? उच्यते—गीतिर्नाम क्रिया[2]ह्याभ्यन्तरप्रयत्नजन्या स्वरविशेषाणामभिव्यञ्जिका[3] सामशब्दाभिलप्या सा नियतप्रमाणायां ऋचि गीयते। तत्संपादनार्थोऽयं [4]ऋगक्षरविकारो विश्लेषो विकर्षणमभ्यासो विरामः स्तोभ इत्येवमादयः सर्वे[5] सामवेदे समाम्नायन्ते' इति । एवं च स्वरैरक्षरविकारादिभिश्च सामस्वरूपं निष्पाद्यत इति सम्यगुक्तमेव । सत्स्वपि बहुषु छन्दोगसूत्रेषु तद्भाष्येषु च प्राधान्येनेयं द्राह्यायणश्रौतसूत्रं धन्विकृतं तद्भाष्यं च अनुसरति । दीपिकाख्यधन्विभाष्योक्तविषयप्रकाशकत्वात् प्रकाशिका इति व्यवहृता। धन्विभाष्यसहितद्राह्यायणश्रौतसूत्रन्तु डाक्टर् जे. एन्. रूटर् नामकेन (Dr. J. N. Reuter) पाश्चात्यविदुषा एकादशपटलप्रथमखण्डसूत्रचतुष्टयावधि मुद्रितम् । ततः पञ्चदशपटलसमाप्तिपर्यन्तं वेदिक् जर्नल् पत्रिकायां प्रकाशितम् ॥

अस्य द्राह्यायणश्रौतसूत्रस्य रुद्रस्कन्देन कृतमप्येकं भाष्यं वर्तते इति ज्ञायते । धन्विना स्वभाष्ये 'केचिदि' त्यनेन अनूद्य खण्ड्यमानं मतं रुद्रस्कन्धमतमेवेति प्रदर्शितेन पाश्चात्यविदुषा स्वकृतटिप्पण्यामसकृत्प्रपञ्चयते । तत्र द्वित्राण्युदाहरणानि—'यूपमुच्छ्रीयमाणं अनुमन्त्रयेरन् नृमण ऊर्ध्वमरसं त्वा' इति (द्रा. श्रौ. २-४-१) । 'एतान्येवोहस्थानानि यावन्तः स्युः' इति (द्रा. श्रौ. २-४ २) । अत्र धन्विभाष्यं—'केचित्तु नृमणशब्द उपक्रमवाची खलेवाल्यां निवर्तत इत्याहुः । तदयुक्तम् । तस्य समासत्वेन बह्वृचतैत्तरीयैरध्ययनात्' इति । अत्र रुद्रस्कन्दनाम न मात्रयापि श्रुतम् । परन्तु रूटर् पण्डितस्तु टिप्पण्यां (thus Rudrask in his com. 2-4-1) इति निर्दिशति ॥

---

[1] के इमे. [2] या सा. [3] का सा सा. [4] ऋक्षु अक्ष. [5] वै समधिगताः समाम्ना.

एवं 'मनसैव यजमान उपस्वरेत्' (द्रा. श्रौ. २-४-१२) ध. भा. 'केचिदार्चिकमित्याहुः' इति। अत्रापि न रुद्रस्कन्दनाम श्रुतम्। रूटर् पण्डितस्तु (thus Rudrask) इत्युक्तवान्। अनेन ज्ञायते रुद्रस्कन्दकृतभाष्यं वर्तते तेन च दृष्टं स्यादिति ॥

अत्र च सूत्रानुक्ता अपि विषयाः केचन प्रदर्शिताः। यथा बहिष्पवमाने धूर्गाने, प्रथमायां उद्गीथभक्तौ 'सकृत्सकृत्प्रेङ्खयित्वा प्रत्येकं पवमाक्षरैः' इति। 'पवमानायेन्दवे' इत्यत्र पकारवकारमकाराणां प्रत्येकं प्रेङ्खस्वर उक्तः। स च वृद्धकर्षणनाम्ना प्रातिशाख्ये व्यवहृतः। छन्दोगदीपिकापरपर्याये आण्डपिळ्ळैनाम्ना कृते छन्दोगश्रौतप्रयोगे एषां त्रयाणामक्षराणां प्रेङ्खस्वर उक्तः। अतश्च ज्ञायते त्रयाणां प्रेङ्खस्वर-प्रदर्शनं प्रामाणिकमेवेति। एवमुत्तरत्रापि। एतादृशविषये सन्देहनिरा-करणार्थं आकरा अपि मया प्रदर्शिताः ॥

यदि निर्मत्सरा सहृदयाः परदूषणविमुखाः इमां श्रौतप्रकाशिकां सम्यक् परिशील्य मनुष्यसाधारणभ्रमप्रमादादिदोषेण सीसकाक्षरसंयो-जनदोषेण वा समापतितानां दोषाणां प्रदर्शनेन मामनुगृह्णीयुः मन्ये तदा मामकीनस्य प्रयासस्य साफल्यम्। अन्यथा प्रयत्नेनानेन भगवान् यज्ञपुरुष एव प्रियतामित्येवमाप्याययें ॥

एतस्याः प्रकाशनं स्वपत्रिकायां अनुमोदितवतां पत्रिकासंपाद-कानां अस्मत्पाठशालाध्यक्षाणां च सुगृहीतनामधेयानां तत्रभवतां एस्. बि. कृष्णमूर्ति महाशयानां भूयो भूयः धन्यवादान् समर्पयामि ॥

एतत्संशोधनाद्यनेकसाह्यं कृतवतां, मत्प्रियसुहृदां आस्थान-विदुषां प्राच्यसंस्कृतकोशागारपण्डितानाञ्च सु. नारायणस्वामिशास्त्रिणां

मुहुर्मुहुः कृतज्ञतां आवेदयामि । वैदिकमार्गप्रवर्तकाग्रेसराणां वैदिकविद्यापरिपालनबद्धदीक्षाणां धर्म्येण राज्यं प्रशासताञ्च अस्मन्महाराजानां आचन्द्रतारकं आयुरारोग्यादिकं प्रयच्छतु भगवान् चन्द्रचूड इति शिवम् ॥

इति सहृदयवशंवदः,

रा. नारायणस्वामिदीक्षितः.

सामवेदप्रधानोपाध्यायः, श्रीमन्महाराजसंस्कृत-
महापाठशाला.

## श्रौतप्रकाशिकायां सङ्केतेन निर्दिष्टानां आकर-ग्रन्थानां विवरणम्.

---

१. म–ब्रा, म = महाब्राह्मणम्.
२. द्रा–श्रौ, द्रा = द्राह्यायणश्रौतसूत्रम् ।
३. द्रा–ध–भा = द्राह्यायणश्रौतसूत्रधन्विभाष्यम् ।
४. आ–पि = आण्डपिल्लै ।
५. सा–वे = सामवेदः ।
६. छा–उ = छान्दोग्योपनिषत् ।
७. ष–वि = षड्विंशब्राह्मणम् ।
८. उप–नि = उपनिदानसूत्रम् ।
९. प्रस्ता–सू = प्रस्तावसूत्रम् ।
१०. प्रति–सू = प्रतिहारसूत्रम् ।
११. पं–सू = पञ्चविधसूत्रम् ।
१२. नि–सू = निदानसूत्रम् ।

---

॥ श्रीः ॥

# सनातनभौतिकविज्ञानम्

---

अयं प्रबन्धः

निवृत्तमहीशूरदेशीयसंस्कृतशालोपद्रष्टृपदेन चेन्नरायपत्तनाभिजनेन

श्रीवेङ्कटरमणार्येण

विरचितः



मैसूरु

राजकीयशाखामुद्रालये सम्मुद्रितः

१९३९

## ग्रन्थविमर्शः

---

श्रीमहीशूरजनपदसम्पदभिवर्णनम्—

[मूल्यम्—अष्टौ कलाः (०—८—०), प्रेषणव्ययः पृथक्; प्राप्ति-स्थानम्—ज्योतिषविहारसदनम्, १०/२७, चामराजाग्रहारः, मैसूरुपुरम्.]

इदन्नामकश्चम्पूप्रबन्धो महीशूरसंस्कृतमहापाठशालायां ज्योतिश्शास्त्रप्रधानोपाध्यायेन ज्यौतिषरत्नं करूरु शेषाचार्येण प्रणीतः। अयं कर्णाटसिंहासनाधीश्वरस्य श्रीकृष्णसार्वभौमस्य शर-नव-वसु-शशि (१८९५) सम क्रिस्तशक निर्वर्तितपट्टाभिषेचनहायनादिसैकचत्वारिंशद्वत्सर (४१) समुपनतदेशप्रजाभ्युदयिककर्मवदावदो नव्यरीतिपरिकर्मितश्चतुश्चत्वारिंशत्पुटात्मकश्चिक्कणघनपत्रमुद्रितश्च समुद्भासते। ग्रन्थेऽत्र विविधविषयाः सङ्गृहीताः। तत्र विशेषतः कृतानि कृष्णराजसागर-बृन्दावन-महीशूरपुर-राजगृह-भूप-विजयदशमीशुभयात्रा-शमीमण्टपवर्णनानि विद्योतन्ते। पदानां मैत्र्या लालित्येन च सकृच्छ्रवणमात्रादेवायं प्रबन्धः सर्वेषां भावाविष्कारको व्युत्पित्सूनां चरित्रजिज्ञासूनां चातीवोपयुक्तः। संस्कृतवाणीप्रणयिभिर्ग्राहकमहादयैः प्रोत्साहनीयोऽयं ग्रन्थः॥

# सनातनभौतिकविज्ञानम्.

## शुद्धाशुद्धप्रत्रिका

| पुटः | पङ्क्तिः | अशुद्धानि | शुद्धानि |
|---|---|---|---|
| 1 | 4 | विज्ञन | विज्ञान |
| 4 | 16 | केचि | केचित् |
| ,, | 20 | molecules | molecules,says |
| 5 | 9 | नाणुनित्वात् | नाणुनित्यत्वात् |
| ,, | 20 | जयः | चयः |
| 6 | 2 | णानां | णूनां |
| ,, | 4 | हरिकाल | हरिताल |
| ,, | 10 | उभयद्रव्य | उभयद्रव्य |
| ,, | 13 | नोदनेत्युच्यते | नोदनमित्युच्यते |
| 7 | 22 | यथा | यथा— |
| 8 | 19 | कारिकाच्च | कारिताच्च |
| 10 | 16 | कक्ष्था | कक्ष्या |
| ,, | 19 | निष्टं | निष्ठं |
| ,, | 24 | अभ्य | आभ्य |
| 11 | 23 | जंबरि | जंबीर |
| ,, | 24 | तैक्त्योः | तिक्तयोः |
| 12 | 4 | सलिलाग्रि | सलिलाग्नि |
| 13 | 11 | पततन्द्रि | पततीन्द्र |
| ,, | 18 | स्रोतसोमू | स्रोतसोर्मू |
| 14 | 4 | पवनशाक्तिः | प्लवनशक्तिः |
| ,, | 11 | भूमिष्टानां | भूमिष्ठानां |
| 15 | 2 | विस्फूर्जतुः | विस्फूर्जथुः |

| पुटः | पङ्क्तिः | अशुद्धानि | शुद्धानि |
|---|---|---|---|
| 15 | 13 | अदित्येन | आदित्येन |
| ,, | 15 | अपः | आपः |
| ,, | 25 | आपः | अपः |
| 16 | 10 | चस्मर | चस्कर |
| ,, | 13 | सपातयः | सपीतयः |
| ,, | 18 | पकोक्तथा | रूपकोक्त्या |
| ,, | ,, | अह्ननोग्निः | अह्नोग्निः |
| ,, | 19 | स्योष्भा | स्योष्मा |
| ,, | 20 | वैद्युस्य | वैद्युतस्य |
| ,, | 21 | प्रतिपद्येत | प्रतिपद्येते |
| 17 | 17 | अकाशं | आकाशं |
| 18 | 10 | एव एव | एव |
| ,, | 25 | जनंति | जानन्ति |
| 20 | 25 | अदित्य | आदित्य |
| 21 | 10 | पंचत्रिंशदधिक-निमेषकालः | पंचत्रिंशान्निमेषभाग-कालः |
| 23 | 5 | भद्राहरितः | भद्रा अश्वा हारितः |
| ,, | 6 | माद्यासि | माद्यासः |
| ,, | 7 | हरितां संभवंति | हरितस्संभरंति |
| ,, | 14 | श्वेत ३ँभो | श्वेतगूंरश्मिभो |
| 24 | 14 | तेजः परमाणूनां | तेजःपरमाणूनां |
| ,, | 24 | सांतत्वं | सांतरत्वं |
| 25 | 5 | नाशा | नाशात् |
| 26 | 8 | संबधात् | सम्बन्धात् |
| 27 | 21 | यस्ताद्रुग्वायुराशि | यस्तादृग्वायुराशि |
| 28 | 5 | कर्मस्पर्श | कर्म स्पर्श |
| ,, | 11 | परिवहः | परीवाहः |
| ,, | 19 | चिक्णः | चिक्कणः |

| पुटः | पङ्क्तिः | अशुद्धानि | शुद्धानि |
|---|---|---|---|
| 28 | 22 | शुश्रुते | सुश्रुते |
| 30 | 2 | ह्यदानो | ह्युदानो |
| ,, | 7 | युङ्क्ते | युङ्क्ष्व |
| ,, | 9 | ,, | ,, |
| ,, | 10 | ,, | ,, |
| 31 | 4 | मूर्धसु । वि | मूर्धसु वि |
| ,, | 6 | पानसमानश्च | पानस्समानश्च |
| ,, | 16 | वायुगैुण | वायुगुणैः |
| 32 | 23-24 | संयोगवि- गच्छब्दाच्च | संयोगाद्वि- च्छब्दाच्च |
| 33 | 11 | मान्वाह | मामन्वाह |
| ,, | 13 | सुम्नयः | सुम्नयुः |
| ,, | ,, | २-२२-१ | ३-१-२८ |
| ,, | 14 | चार्याः | चार्यः |
| ,, | 20 | उत्पाद्यते वा । कार्य | उत्पाद्यते वा कार्य |
| 34 | 21 | ग्रहंण | ग्रहणं |
| ,, | 8 | च | चा |
| 35 | 9 | श्रुणोत्यसौ | शृणोत्यसौ |
| ,, | 11 | अकाशे | आकाशे |
| ,, | 13 | श्रुणोति | शृणोति |
| ,, | 25 | कालतच्च | कालतश्च |
| 36 | 2 | पृथिवीमयूखैः | पृथिवीमभितोमयूखैः |
| ,, | ,, | एकमुत्तमः | एकमुत्तमम् |
| ,, | 14 | वेदनं | वेदना |
| ,, | 16 | पतङ्गमुक्तमसुरस्स | पतङ्गमक्तमसुरस्य |
| 37 | 3 | अन्याशक्तयः | अन्याःशक्तयः |
| 38 | 17 | ऋणद्धि | रुणद्धि |

## समस्या

प्राज्ञो नाविकमात्ममूर्ध्नि कलयन् राज्ञस्सभां गाहते ।

समस्यामेतामापाततः प्रतीयमानविरोधनिबर्हणपूर्वकमन्तर्लापि-
मुद्रया यथारुचि पूरयत ॥

## धानापदेशः

क्वणन्ति नृत्यन्त्यभितः स्खलन्ति
हसन्ति धान्यानि हसन्तिकाग्नौ ।
यान्यात्मनां भाविघरट्टकुन्त-
दन्तार्तिशूर्पप्रहृतीर्विदुः किम् ॥

## अल्पाक्षरपदसमुदयप्रशस्तिः

कविताध्वनीनैरविस्मरणीयमिदं (७६) षट्सप्ततिवर्णमयपाथेयम्—

कृत्यं सर्षपसाध्यमाकलयितुं नह्यद्रिराजोऽप्यलं
कार्यं दीर्घपदैः किमाशुकवितामध्याध्वहस्ता(स्त)प्रदैः ।
वर्तन्तां लघुवर्णभूषितपदान्येवान्तिकेनऽपरं
यान्युत्क्रान्तकविव्रजासुनिवहप्रोज्जीवनैकौषधम् ॥

स. श्रीनिवासदेशिकाचार्यः,
सरस्वती—भाण्डागार—प्रथमपण्डितः.

## विज्ञप्तिः

भो भो महाशयाः! सहृदयाः! सप्रश्रयमिदमिदानीं विज्ञापयामः–संस्कृतविद्याभिमानिनः पुरुषप्रवराः यं कंचन विषयमधिकृत्य संस्कृतभाषामयं अनतिसंक्षिप्तविस्तरं उपक्रमोपसंहारपरिकर्मितं कस्याप्यनुद्वेगकरं अचर्चितपूर्वं कालदेशदशानुगुणं प्रपञ्चोपकारकरं धर्माद्यविरुद्धं "जीर्णमङ्गे सुभाषितम्" इति निर्वेदस्य "वीरा वाचैव केवलम्" इत्यपवादस्य वा प्रशमकरं प्रस्पष्टमुखविलासमुपन्यासं विलिख्य यदि प्रेषयेयुर्महान्तः, तेभ्यो मह्यद्भयः समर्प्य अनन्तान् धन्यवादान् पत्रिकायामस्यां तमुपन्यासं पारयामः प्रकाशयितुम् ॥

यदीच्छति वशीकर्तुं जगदेकेन कर्मणा ।
परापवादसस्येभ्यो गाश्चरन्तीर्निवारयेत् ॥
न हीदृशं संवननं त्रिषु लोकेषु विद्यते ।
दया मैत्री च भूतेषु दानं च मधुरा च वाक् ॥

संपादकस्य.

---

## मूल्यप्रकारः

१. अस्याः पत्रिकायाः वार्षिकम् अग्रिमं मूल्यं सार्धैकरूप्यकम्
प्रापणव्ययः (भारतमण्डले.) .... .... पादरूप्यकम्
२. विद्यार्थिनां पुनः एकरूप्यकम्. प्रापणव्ययः ,,
३. विभिन्नदेशे सपादरूप्यद्वयम् (3s.) प्रापणभृतिः अर्धरूप्यकम्

पत्रिकाप्राप्तिस्थानम्,
संपादकः,
श्रीमन्महाराजसंस्कृतमहापाठशाला, मैसूरु.

## सधन्यवादमस्माभिरङ्गीकृता एताः विनिमयरूपाः पत्रिकाः

---

1. श्री संस्कृतसाहित्यपरिषत्पत्रिका, श्रीनगरम्.
2. संस्कृत साहित्यपरिषत्पत्रिका, कल्कत्ता
3. उद्यानपत्रिका, तिरुवाडि.
4. सुप्रभातम्, काशी.
5. सूर्योदयः, काशी.
6. संस्कृतरत्नाकरः, जयपुरम्.
7. शङ्करगुरुकुलपत्रिका, श्रीरङ्गम्.
8. अच्युतः, काशी.
9. कल्याणम्, गोरखपुरम्.
10. मधुरवाणी, बेलगाम्.
11. The Mythic Society Journal, Bangalore.
12. Annals of the Bhandarkar Oriental Research Institute, Poona.
13. Review of Philosophy and Religion, Poona.
14. Journal of Oriental Research, Madras.
15. The Law College Magazine, Madras.
16. Sunday Edition, "The Hindu," Madras.
17. The Aryan Path, Bombay.
18. The Theosophical Movement, Bombay.
19. The Philosophical Quarterly, Calcutta.
20. Karnataka Historical Review, Dharwar.
21. New Asia, Calcutta.
22. Rising Youth, Maharaja's High School Mysore.
23. "Yoga," Bombay.
24. Poona Orientalist, Poona.

25. The Mimamsa Prakasa, Poona.
26. Brahmavidya, Adyar, Madras.
27. Oriental Literary Digest, Poona.
28. The Jaina Gazette, Lucknow.
29. The Punjab Oriental Research, Lahore.
30. ಆಂಧ್ರ ಸಾಹಿತ್ಯಪರಿಷತ್ಪತ್ರಿಕಾ, ಕಾಕಿನಾಡ.
31. ಗ್ರಾಮಸೇವೆ, ಮೈಸೂರು.
32. ಸನಾತನಮತಪ್ರಚಾರಿಣೀ, ಘಟ್ನವಲ್ಲಿ.
33. ಜಯಕರ್ಣಾಟಕ, ಧಾರವಾಡ.
34. ಸದ್ಬೋಧಚಂದ್ರಿಕೆ, ಆನಂದವನ.
35. ವಿಶ್ವಕರ್ಣಾಟಕ, ಬೆಂಗಳೂರು.
36. ತಾಯಿನಾಡು, ಬೆಂಗಳೂರು.
37. ಅಧ್ಯಾತ್ಮಪ್ರಕಾಶ, ಹೊಳೆನರಸೀಪುರ.
38. ಕರ್ಣಾಟಕ ಸಾಹಿತ್ಯಪರಿಷತ್ಪತ್ರಿಕೆ, ಬೆಂಗಳೂರು.
49. ಕಾದಂಬರೀಸಂಗ್ರಹ, ಚಾಮರಾಜನಗರ.
40. ಪ್ರಬುದ್ಧಕರ್ಣಾಟಕ, ಮೈಸೂರು.
41. ವಿವೇಕಾಭ್ಯುದಯ, ಮೈಸೂರು.
42. ಗರಿಕೆ, ಮೈಸೂರು.
43. Sen Tamil, Madura.
44. ವಿಭೂತಿ, ಸಿಕಂದರಾಬಾದ್.
45. ಗೌರ್ನ್ಮೆಂಟ್ ಟ್ರೈನಿಂಗ್ ಕಾಲೇಜ್ ಪತ್ರಿಕೆ, ಮೈಸೂರು.

---